BIBLIOTHECA INDICA:
A
COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL
NEW SERIES, NO. 1276.

# अनुमान-दीधिति-प्रसारिणी




# ANUMANA DĪDHITI PRASARINI

BY
KRISHNA DAS SARVABHAUMA

WITH TATTVACINTAMANI AND DIDHITI

EDITED BY
PANDIT PRASANNA KUMAR TARKANIDHI
*Professor, Sanskrit College.*

FASCICULAS I.-III

Calcutta:
PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,
No. 5, Nandakumar Choudhury's 2nd Lane.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1911.

# ASIATIC SOCIETY OF BENGAL.

No 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,
11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO
HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied —some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series*

| Title | Rs. | As. |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc 2, 4 @ /10/ each .. | 1 | 4 |
| Advaitachintā Kaustubha, Fasc 1-3 @ /10/ each ... | 1 | 14 |
| *Agni Purāṇa, Fasc 6-14 @ /10/ each | 5 | 10 |
| Aitarēya Brāhmaṇa, Vol I, Fasc 1-5 ; Vol. II, Fasc 1-5 ; Vol III, Fasc. 1-5, Vol. IV, Fasc 1-8 @ /10/ each ... | 14 | 6 |
| Aitereya Lochana. ... ... ... | 2 | 0 |
| *Aṇu Bhāṣhya, Fasc 2-5 @ /10/ each | 2 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc 1 @ 1/- | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each | 3 | 12 |
| *Atharvana Upanishad, Fasc 4-5 @ /10/ each ... | 1 | 4 |
| Atmatattaviveka, Fasc I @ /10/ each ... ... | 0 | 10 |
| Açvavaidyaka, Fasc 1-5 @ /10/ each | 3 | 2 |
| Avadana Kalpalatā, (Sans. and Tibetan) Vol I, Fasc 1-7 ; Vol II Fasc. 1-7 @ 1/ each ... | 15 | 0 |
| Bālam Bhattī, Vol. I, Fasc 1-2, Vol 2, Fasc 1 @ /10/ each ... | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc 1-3 Vol II, Fasc 1-3 @ /10/ each | 3 | 12 |
| *Bhāmatī, Fasc 4-8 @ /10/ each ... | 3 | 2 |
| Bhātta Dīpikā Vol. I, Fasc 1-6 ; Vol 2, Fasc. 1, @ /10 each | 4 | 6 |
| Baudhyostatrasangraha ... .. .. .. | 2 | 0 |
| Bṛhaddēvatā Fasc 1-4 @ /10/ each .. ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc 1-5 @ /10/ each ... | 3 | 2 |
| Cri Cantinatha Charita, Fasc 1-3 ... .. .. | 1 | 14 |
| Çatadūṣaṇī, Fasc 1-2 @ /10/ each | 1 | 4 |
| Catalogue of Sanskrit Books and MSS, Fasc 1-4 @ 2/ each | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I, Fasc 1-7, Vol II, Fasc 1-5, Vol. III, Fasc. 1-7 Vol 5, Fasc. 1-4 @ /10/ each .. | 14 | 6 |
| Ditto Vol. 6, Fasc. 1-3 @ 1/4/ each ... .. | 3 | 2 |
| Ditto Vol. VII, Fasc 1-5 @ /10/ .. ... | 3 | 2 |
| Çatasāhasrikā Prajñāpāramitā Part, I, Fasc. 1--14 @ /10/ each .. | 8 | 12 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25 ; Vol III, Part I, Fasc. 1-18. Part II, Fasc 1-10 Vol. IV, Fasc. 1-6 @ /10/ each | 36 | 14 |
| Ditto Vol. 4, Fasc. 7-8, @ 1/4/ each .. ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 8-9 @ /10/ ... .. | 1 | 4 |
| Çlockavartika, (English) Fasc 1- 7 @ 1/4/ each .. .. | 8 | 12 |
| *Çrauta Sūtra of Āpastamba, Fasc. 1-17 @ /10/ each .. | 3 | 12 |
| Ditto Çāṅkhāyana, Vol. I, Fasc 1-7 ; Vol. II, Fasc. 1-4, Vol. III, Fasc. 1-4 ; Vol 4, Fasc. 1 @ /10/ each ... | 10 | 0 |
| Çri Bhāshyam, Fasc 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dāna Kriyā kaumudī, Fasc 1--2 @ /10/ each .. | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| Ditto Āchārasārah Vol. II, Fasc. 1-4 @ /10/ each ... | 3 | 2 |
| Gobhiliya Grihya Sutra, Vol. I @ /10/ each ... ... | 3 | 2 |
| Ditto Vol. II. Fasc. -2 @ 1/4/ each ... ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... | [illegible] | [illegible] |
| Haralata ... ... .. | 1 | 14 |
| Karmapradiph, Fasc. I ... ... | [illegible] | [illegible] |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| Kātantra, Fasc 1-6 @ /12/ each ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each ... | 17 | 8 |
| *Kūrma Purāṇa, Fasc. 8-9 @ /10/ each ... ... | 4 | 6 |
| Lalita-Vistara, ( English ) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... | 6 | 14 |
| Mahā-bhāṣya-pradīpōdyōta, Vol. I, Fasc. 1-9 ; Vol. II, Fasc. 1-12 Vol. III, Fasc 1-10 @ /10/ each ... ... | 19 | 6 |
| Ditto Vol IV, fasc. 1 @ 1/4 ... ... | 1 | 4 |
| Manuṭīkā Sangraha, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Mārkandēya Purāṇa, (English) Fasc. 1-9 @ 1/- each | 9 | 0 |

# तत्त्वचिन्तामणि: ।



## प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तरं बहुवादिसम्मतत्वादुपमानात् प्रागनुमानं निरूप्यते ।

---

### अनुमानदीधिति: ।

ओं नमः सर्व्वभूतानि विष्टभ्य परितिष्ठते ।

अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥ १ ॥

पूर्व्वापरग्रन्थैकवाक्यताप्रतिपत्तये शिष्यानामवधानाय च सङ्गतिं प्रदर्शयन्ननुमाननिरूपणं प्रतिजानीते प्रत्यक्षेत्यादि ।

---

### दीधितिप्रसारिणी ।

श्रीगणेशायनम, परदेवतायै नमः । विष्टभ्येति । न च विष्टम्भः संयोगविशेषः । स च आकाशेन समं नास्तीति कथमेतदिति वाच्यम् । तत्पदेन (१) सहकारित्वस्यैव विवक्षणात् ।

---

(१) विष्टम्भपदेनेत्यर्थः, तथाच जगन्निर्माय, तद्रक्षणार्थं सर्व्वभूतानि सहकार्यस्थितायेत्यर्थः ।

अत्रोपजीव्योपजीवकभावः फलतः स्वरूपत
प्रत्यक्षफलस्यानुमित्यनुव्यवसायादेरनुमित्युपजीवकत
ऽपि न सर्व्वाः प्रत्यक्षप्रमितयस्तथा ।

---

स्वयमेव विश्वान्तरनिरासात् वा । अखण्डेति । ईश्वरे स्वयमेव नित्यसुखव्यवस्थापनात् एतदुक्तम् । ननु सङ्गतं हि निरूप्यम् तदुपनिबन्धश्च मूले व्यर्थः इत्यत आह पूर्व्वेति ।

तथाच सङ्गति (१) व्याप्या तया चैकवाक्यतानुमानमित्यर्थः (२) । ननु किन्तावदेकवाक्यत्वम् । न तावत् विशिष्टैकार्थान्वयबोधजनकत्वम् । प्रकृत एव तदभावात् नापि तदेकतात्पर्य्यकत्वं, विभिन्नतात्पर्य्यकेऽपि प्रसङ्गादिसङ्गतिसत्त्वादित्यत आह शिष्यानामवधानायेति प्रत्यक्षेति तु लिखनं भ्रमविजृम्भितमेव, आभासग्रन्थे (३) अकारासत्त्वात् प्रत्यक्षवित्यादीत्येव पाठः साधुः । प्रकृतग्रन्थस्य स्वरसस्खलितस्यैव लिखनयोग्यत्वादिति । फलत इति । फलयोरुपजीव्योपजीवकभाव एव प्रमानयोरपि जिज्ञासायाम्परम्परोपयुक्त इति नार्थान्तरमिति ।

साक्षाज्जिज्ञासोपयुक्तमाह स्वरूपत इति । अनुमित्यनुव्यवसायादेरिति लौकिकप्रत्यक्षे विषयस्य कारणत्वादिति

---

(१) सङ्गतिमदर्थ प्रतिपादकत्वमेवात्र सङ्गतिपदेन ग्राह्यं एकवाक्यत्वस्य ग्रन्थ एव वृत्तेः ।

(२) अनुमानग्रन्थः प्रत्यक्षग्रन्थैकवाक्यतावान् तत्प्रतिपाद्यार्थ सङ्गतिमदर्थप्रतिपादकत्वादित्येवं रूपमनुमानम् ।

(३) मूलग्रन्थे इत्यर्थः ।

अनुमितयस्तु सर्व्वाः साक्षात् परम्परया वा व्याप्त्यादिप्रत्यक्षोपजीवका। पुरस्कृतश्चायमुपजीवकतोत्कर्षः।

यद्यपि सकलमेव प्रत्यक्षफलमुपजीवत्यदृष्टजननीं

---

भावः। आदिपदेनानुमित्यात्मकविशेषणज्ञानजन्यविशिष्टवैशिष्ट्य-प्रत्यक्षं संगृहीतम्।

ननु प्रमिति विभाजकधर्म्मसामानाधिकरण्येनापि उपजीव्योपजीवकभावोऽनुमितिप्रत्यक्षयोः सम्भवत्येव। स एव कथं नादृत इत्यत आह पुरस्कृत इति। अयं तद्धर्म्मावच्छिन्नः समयः सङ्केतः, तत्परिच्छेदिकानुमितिस्तु इदं पदमतच्छक्तं असतिवृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वादित्यादिरूपा। मत्कर्त्तव्यतापरिच्छेदिका च इदं मत्कर्त्तव्यं, मत्कृतिं विना असत्त्वे सति मदिष्टसाधनत्वादित्यादिरूपा, एवमादिपदादिष्टसाधनतानुमितिरपि (१) बोध्याः, ननु तथापि प्रमिति विभाजकोपाध्यवच्छेदेन नोपजीवकता, प्रमिति विभाजकोपाधेः प्रत्यक्षत्वस्य ईश्वरज्ञानवृत्तित्वात्, तथाच क्व पुरस्कार इत्यत आह ईश्वरप्रत्यक्षमिति तथाच प्रमिति विभाजकोपाध्यवच्छेदेन नोपजीवकता, किन्तु फलतावच्छेदकावच्छेदेन, तच्च जन्यप्रत्यक्षत्वमेव इति भावः। दृष्टद्वारेति।

यद्यपि अदृष्टजनकमपि दृष्टद्वारकमेव तथापि दृष्ट-

---

(१) यागोमदिष्टसाधन. माद्दशाधिकारिप्रवर्त्तकप्रमाणशब्दबोधितकर्त्तव्यताकत्वात् इत्येवमिष्टसाधनत्वानुमानम्।

**समयमत्कर्त्तव्यतादिपरिच्छेदिकामनुमितिम् ईश्वरप्रत्यक्षन्तु न फलं तथापि दृष्टद्वारकमिह तथात्वमादरणीयम् ।**

**इतरस्याविनिगम्यत्वात्, सर्व्वज्ञानुमितिकरणमिन्द्रियापेक्षोत्पत्तिकम् । अनुमितिं भावयतोऽपीश्वरज्ञानस्य तत्करणतानिर्व्वाहकप्रत्यासत्तिविरहेण तथात्वात् ।**

---

मात्र(१) द्वारके तात्पर्य्यं, इतरस्य दृष्टादृष्टसाधारणस्य फलतावच्छेदकावच्छिन्नमुपजीव्योपजीवकभावं पुरस्कृत्यस्वरूपतस्तमाह सर्व्वेमिति । अनुमितिमित्यादि । प्रत्यासत्तिः फलसामानाधिकरण्यरूपा, अतथात्वात् अकरणत्वात्, ननु प्रमितिकरणं प्रमाणम्, तच्च स्वरूपयोग्यं न च सर्व्वत्र स्वरूपयोग्ये फलसम्बन्धो मृग्यते, अरण्यस्थदण्डादीनामतथात्वात्, किञ्च फलसामानाधिकरण्यमपि परामर्शएवापेक्षणीयम् । अन्यथा एकस्य पुंसः परामर्शसत्त्वेऽन्यस्य परामर्शविधुरस्य व्याप्तिज्ञानवतोऽनुमित्यापत्तेः, तथाच तत्रा(२)वश्यकत्वे करणेऽपि तत् (३) कुतो निवेशनीयम् इति चेन्न, ईश्वरज्ञानस्य

---

(१) ननु दृष्टमात्रद्वारकमपि अदृष्टाद्वारकत्वेमति दृष्टद्वारकं तदप्यसिद्धं प्रत्यक्षस्यापि संस्काररूपादृष्टद्वाराव्याप्तिस्मरणरूपानुमानोपजीव्यत्वादिति चेन्न अदृष्टशब्दस्य धर्म्माधर्म्मपरत्वात् ।

(२) परामर्शे ।

(३) सामानाधिकरण्यम् ।

**सर्व्वं पुनरिन्द्रियं नानुमानाधीनजन्म मनःश्रवण-योरजन्यत्वात् ।**

**दृष्टद्वारा वा तथात्वमादरणीयम् ।  न चोत्पत्ति-मदपीन्द्रियं दृष्टद्वारकमनुमानमपेक्षते ।**

---

अनुमितिं प्रति तथा कारणत्वाभावात्, उपादानप्रत्यक्षत्वेनैव तस्य कारणत्वात्, अन्यथा तस्य नित्यस्य तत्त्वे फलावश्यम्भावापत्तेः, न चेश्वरीयं ज्ञानं फलोपहितमेवेति वाच्यं, कारणतानिर्व्वाहकसम्बन्धेन फलानुपहितत्वात्, तत्र व्याप्तौ तथैव निवेशात्, अन्यथाऽनियमापत्तेः ।

न च कारणतायां सामानाधिकरण्यं न निविष्टं, इति वाच्यं, येन सम्बन्धेन ग्राहकान्वयव्यतिरेकौ तेन सम्बन्धेन कारणत्वकल्पनस्यैवोचितत्वात्, अन्यथा अतिप्रसङ्गात्, तच्च सामानाधिकरण्येनेति दिक्, सामानाधिकरण्येन फलोपहितस्वरूपस्यैव उपजीव्योपजीवक भावः। जलपरमाणौ स्नेहानुत्पत्त्या तथा व्याप्तेरनङ्गीकारात्, अप्रयोजकत्वादित्यर्थभावनिरूपणमिति कश्चित्, फलायोगव्यवच्छिन्नं कारणं करणमिति मतावष्टम्भेनेदमित्यपरे, स्वमते नित्यस्य इत्यादिव्याप्तेरप्रयोजकत्वमभिप्रेत्य आह दृष्टद्वारा वेति, तथा चादृष्टाद्वारकप्रमाणतावच्छेदक-सामानाधिकरण्येनोपजीव्योपजीवकभावः प्रकृते पुरस्कृत इति भावः। उत्पत्तिमदपीति । तथा चेन्द्रियत्वसामानाधिकरण्येन तथोपजीवकत्वं प्रकृते नास्तीति भावः, न चानुमितिकरणस्येश्वरज्ञानस्य इन्द्रि-

अथोपजीव्यं निरूप्यैवोपजीवकं निरूप्यत इति न नियमः क्वचित् कार्य्यं निरूप्यापि कारणनिरूपणात् इति चेत् किञ्चातः न हि सङ्गतिरनन्तराभिधानव्याप्या, आनन्तर्य्याभिधान-प्रयोजक-जिज्ञासा-जनज्ञान-विषयो ह्यर्थः सङ्गतिः।

जायते च कार्य्ये कारणे वा ज्ञाते कार्य्यत्वस्य कारणत्वस्य वा ज्ञानात् किमस्य कारणं कार्य्यम्वेति जिज्ञासा अतएव तयोर्द्वयोरेव सङ्गतित्वम्।

---

यादिकं प्रत्युपजीवकत्वेन प्रत्यक्षकरणेऽपि अदृष्टाद्वारकोपजीवकत्वसत्त्वात्, एतदप्यनुमानसाधारणमिति वाच्यं, अदृष्टाद्वारकपदेनैव वारणात्, तदर्थश्च तज्जनकादृष्टाजनकत्वे सति तज्जनकत्वं न चेश्वरज्ञानस्य कार्य्यमात्रजनकस्यैतदस्तीति भावः, यत्र यत्र सङ्गतिस्तत्र तत्रानन्तराभिधानम्, तथा चोपजीवकत्वमेव सङ्गतिः।

तच्चानुमानत्वस्यैव इति मूल एव सुव्यक्तं अतएव तथैव व्यवस्थापितं पुरस्कृत इत्यादिना इति भ्रमं निराकर्त्तुं भूमिकामारचयति अथेति, आनन्तर्य्येति। आनन्तर्य्याभिधानप्रयोजिका या जिज्ञासातज्जनकं यज्ज्ञानं तद्विषयो योऽर्थः सा सङ्गतिरित्यर्थः। सङ्गतिज्ञानस्य जिज्ञासाजनकत्वन्तु अन्वयव्यतिरेकाभ्यां सम्प्रतिपन्नवदित्यवधेयं, कार्य्यसामान्यज्ञानात्कार्य्य-

इत्थञ्चोपजीवकतायास्तुल्यत्वेऽपि न क्षतिरिति मन्तव्यम् । लाघवायात्वैवोपमानस्य सङ्गतिं प्रदर्शयति बहुवादीति । सुप्रसिद्धतया निरसनीयाल्पवादिविप्रतिपत्तिकत्वेन सुप्रतिपद्यतया चानुमान एव व्युत्पित्सोः प्रथमं जिज्ञासा नोपमानेऽप्रसिद्धत्वात् निरसनीयबहु-

---

विशेषे जिज्ञासा तया च गुरुणानिरूप्यत इति जिज्ञासायां आनन्तर्य्याभिधानप्रयोजकत्वं, घटादिजिज्ञासाजनकसामान्यज्ञानविषयेऽर्थे अतिव्याप्तिवारणायप्रयोजकान्तं, यद्यपि प्रकृतजिज्ञासाया अपि उपायेच्छात्वं अतस्तज्जनकेष्टसाधनताज्ञानविषये इष्टसाधनत्वे इत्थमप्यतिव्याप्तिः, तथापि तादृशजिज्ञासात्वावच्छिन्नकार्य्यतानिरूपितकारणताशालित्वमिष्टबोध्यं तादृशजिज्ञासात्वावच्छिन्नत्वञ्च तादृशजिज्ञासात्वानतिरिक्तवृत्तिधर्म्मावच्छिन्नत्वं, अतस्तादृशजिज्ञासात्वस्य कार्य्यतामवच्छेदकत्वेऽपि न क्षतिः, न च विशिष्टसङ्गतिघटकैकदेशे अतिव्याप्तिः तथा कारणतायाः विषयतासम्बन्धेनावच्छेदकतापर्य्याप्त्यधिकरणत्वस्य विवक्षितत्वात् हेत्वाभासलक्षणवत् ।

इत्थञ्चेति सङ्गतेरनन्तराभिधानाव्याप्यत्वे चेत्यर्थः, तथाच प्रत्यक्षे उपजीव्यवदुपजीवकत्वमपि वर्त्ततां, न चैतावतापि क्षतिरिति भावः । अतएव तद्धर्म्मावच्छिन्नोपजीवकत्वपुरस्कारे विवादेऽपि न दोषः, परन्तु प्राचीनविचारस्तु मूलमनुरुद्ध्यैवेति ध्येयम् । लाघवाय तात्पर्य्यंलाघवाय-निरसनीयाल्पवादि-विप्रति-

वादिविप्रतिपत्तिकत्वेनातिदुरूहत्वाच्च औत्सर्गिकीं रीतिमनुरुद्ध्येदं तेन कस्यचिद्दुरूहे प्रथमं जिज्ञासोदयेऽपि न क्षतिः। तथाचावसरसङ्गत्योपमाननिरूपणमिति भावः यथा चावसरस्य सङ्गतित्वं तथा व्यक्तमाकरे।

शब्दान्तरसमयग्राहकं सप्रवृत्तिनिमित्तकत्वबोधकं सामान्यतो दृष्टमन्ततोऽदृष्टजनकप्रवृत्त्यौपयिकज्ञानुमानमपेक्ष्यते निखिलमेवोपमानमितीहापि उपजीवकत्वमेव सङ्गतिरिति केचित्। सम्भवति चेह निरूपण-

---

पत्तिकत्वेनेति सुप्रतिपदतायां हेतुः एवमुत्तरत्र, ननु प्रतिबन्धकीभूतजिज्ञासानिवृत्तिरवसरः, सा च स्वरूपसत्येव उपयुज्यते प्रतिबन्धकाभावत्वात् तथाच तत्र लक्षणमव्याप्तमित्यत आह यथाचेति आकरे इति प्रतिबन्धकीभूतजिज्ञासानिवृत्तौ सत्यां वक्तव्यत्वज्ञानादेव जिज्ञासाजायते इति तस्यैव सङ्गतित्वं इति प्राचीनैरभिधानादिति अतएव "विरम्यत," इति ग्रन्थादिपरिसमाप्तौ तैरभिधीयत इति, जिज्ञासितार्थंप्रौक्तत्वमवसर इत्यपि कश्चित्। एवं प्रसङ्गोपि उपेक्षानर्हत्वादिकमेव सङ्गतिरिति ध्येयम्। विचारस्तु अनुमानालोकप्रसारिण्यामनुसन्धेयः।

शब्दान्तरेति उपमितिविषयीभूतभिन्नस्येत्यर्थः, उपमितिविषयीभूतस्य तु आह सप्रवृत्तिनिमित्तकमिति, गवयपदं स प्रवृत्तिनिमित्तकं साधुपदत्वात् इत्याकारकमित्यर्थः, सर्व्वत्राह

योरपि कार्य्यकारणभावः, अथ तत्पूर्व्वकमित्यादिसूत्रे तत्पूर्व्वकत्वेनानुमाननिरूपणात् तच्छब्देन व्याप्यादिप्रत्यक्षपरामर्शादेश्चापि सहचारप्रत्यक्षजन्यत्वादिना तन्निरूपणात् तस्य च प्रत्यक्षनिरूपणाधीनत्वात् । एवमुपमानभिन्नत्वेनानुमाननिरूपणमपि अनुमानापेक्षमिति संक्षेपः । तत्र लक्षणस्वरूपप्रामाण्यादिभिरनुमाने निरूपणीये करणस्य क्रियाभेदभिन्नमूर्त्तिकतया, क्रियालक्षणपूर्व्वकं तल्लक्षणमाह ॥११॥

---

अन्यत इति केचिदित्यस्वरसोद्भावनं तद्बीजन्तु बहुवादिसम्मतत्वादिति हेत्वसङ्गतिः ननु प्रत्यक्षानुमानयोः सङ्गत्यभिधानेऽपि तन्निरूपणयोः पौर्व्वापर्य्यनियमे किमपि प्रयोजकं नोक्तमित्यत आह सम्भवति चेति एवं निरूपणयोरपि कार्य्यकारणभावः सङ्गतिमुद्रया नो शङ्कितो येनार्थान्तरमाशङ्क्येतेति ध्येयं, ननु करणनिरूपण एव क्रियाया अपेक्षेति न युक्तम् अन्यथापि तन्निरूपणसम्भवादित्यत आह लक्षणस्वरूपेति लक्षणं तत्कारणमित्यादिना स्वरूपं तच्चेत्यादिना प्रामाण्यम् अथेत्यादिना एषु सर्व्वेष्वनुमित्यपेक्षेति भावः ।

अनुमानं निरूप्यत इति मूलस्यानुमानविशेष्यकान्वयबोधजनकत्वात्तस्यैव तत्पदेन परामर्शः इति तथैव व्याचष्टे तत्रेति ।

निरूपणीये इति सति सप्तमीविशेषणस्य निरूपणस्य विषय-

# तत्र व्याप्तिविशिष्टपक्षधर्म्मताज्ञान-जन्यज्ञानमनुमितिस्तत्करणमनु-मानम् ।

व्याप्तीति तत्र व्याप्तिविशिष्टत्वपक्षधर्म्मत्व-सामानाधिकरण्यावगाहिज्ञानजन्यत्वमर्थः कर्म्मधारयोत्तर-भावप्रत्ययस्य पदार्थतावच्छेदकद्वयसामानाधिकरण्य-वचनत्वात् ॥ १२ ॥

---

तया अनुमित्याधारत्वात् आधारसप्तमीयमतो न प्रथमान्तान्वय-विरोध इत्यपि कश्चित् ॥ ११ ॥

कर्म्मधारयेति कृत्तद्धितसमासेभ्यः सम्बन्धावगमः त्व-तल्भ्यामिति कात्यायनवचनादिति भावः ननु भावप्रत्ययस्य समानाधिकरणत्वेन तत्तत्पदार्थतावच्छेदकद्वयसमानाधिकरणत्वेन वा शक्तिः, आद्ये नीलत्वोत्पलत्वयोरेव लक्षणागौरवात् नीलोत्पल-पदादभेदान्वयानुभवापलापापाताच्च, द्वितीये । अनन्तशक्ति-कल्पनाप्रसङ्गात्, केवलघटत्वादौ च पृथक्शक्तिकल्पनम् । नील-घटीयनीलत्वघटत्वसामानाधिकरण्यं इत्याकारकानुभवाङ्गीकारे च अनुभवविरोधः, इत्येकदेशान्वयविरोधश्चेति, मैवं केवलघटत्व-मित्यादौ भावप्रत्ययस्य कृप्ताया एव शक्तेः प्रकृतार्थलाभात् तत्र हि घटेतरावृत्तित्वे सति सकलघटवृत्तित्वप्रकारेण घटत्वमुपस्थाप्यते,

ज्ञानपदोपसन्धानेन च बाधितासाधारणतज्ज्ञानलाभान्नभ्रान्तानुमित्यव्याप्तिरित्याहुः । तन्न परामर्शेन नियमतो व्याप्तिवैशिष्ट्यादि सामानाधिकरण्यग्रहे मानाभावात् । गौरवेन च तद्विषयकत्वेनाहेतुत्वात्, सम्बन्धसम्बन्धाग्रहेऽपि विशिष्टज्ञानत्वस्योपपादितत्वात् ॥ १३ ॥

---

तत्र च प्रकृतित एव घटस्य लाभः इतरावृत्तित्वमित्यादावेव भावप्रत्ययस्य शक्तिः तत्रापि इतरः वृत्तित्वमभावश्चार्थः अन्यथा इतरवृत्तित्वाभावस्य वृत्तित्वाभावपर्य्यवसन्नतया (१) घटत्वादौ तद्बोधाप्रसङ्गात्, एवं इतरवृत्तित्वयोः सम्बन्धस्य शक्यत्वे गौरवाच्च । अस्मन्मते तु वाक्यार्थमर्य्यादयैव तल्लाभात् तथाच प्रकृतेऽपि नीलघटेतरावृत्तित्वादिनैवान्वयबोधः, न च सामानाधिकरण्यवचनत्वादिति ग्रन्थविरोधः नीलघटत्वस्यैव विवक्षितविवेकेन नीलत्वघटत्वसामानाधिकरण्यरूपत्वात् ॥ १२ ॥

न च नीलघटत्वमितिशब्दात् नीलकम्बुग्रीवादिमत्त्वबोधः स्यात्, सकलतद्वृत्तित्वं इत्यत्र तत्तत्समभिव्याहृतावृत्तित्वविशेषणतयैव तन्निरासात् नियमत इति

व्याप्तिविशिष्टवानित्यत्र तज्ज्ञानेऽपि व्याप्यवानित्यत्र सुतरां तदभावः । ननु तथा हेतुतैव तत्र मानं इत्यत आह गौरवेनेति ।

---

(१) समनियतत्वेनेतरवृत्तित्वाभावस्य वृत्तित्वाभावादनतिरिक्तत्वादिति भावः ।

भ्रमस्थले च तादृशसामानाधिकरण्याप्रसिद्ध्या-तज्ज्ञानासम्भवात् असत्ख्यातिनिरासात् अवान्तर-वाक्यार्थायोग्यत्वनिर्णये महावाक्यार्थज्ञानानुदयात्, विषाणे शशसम्बन्धाभावनिर्णयदशायां शशविषाण-जन्यमिदं कार्म्मुकमित्यादिशब्दे शाब्दबुद्धेर्भ्रमणापि दुरुपपादत्वात् ।

न च प्रमाणप्रस्तावात् प्रमैव लक्ष्या यदि च सन्दिग्धपरामर्शादपि भ्रान्तानुमिति तदाचरमज्ञान-पदं प्रमापरमिति वाच्यं अव्याप्यापक्षधर्म्मयोस्तत्त्वाव-गाहिनापरामर्शेन जनितायां वस्तुतः साध्यवत् पक्षाव-गाहितया प्रमायामव्याप्तेः । लिङ्गोपहित-लैङ्गिकभान-निरासेनांशिकभ्रमत्वस्याप्ययोगात् ॥ १४ ॥

---

ननु माभूत् तथा हेतुता मानं किन्तु विशिष्टज्ञानान्यथानुपपत्तिरेव मानं भविष्यतीत्यत आह सम्बन्धसम्बन्धाग्रह इति उपपादितत्वा-दिति ॥ १३ ॥

भवतामपि सम्बन्धसम्बन्धविषये तथेतरसमूहालम्बनवैलक्षण्येऽपि सम्बन्धसम्बन्धविषयकसमूहालम्बनतोऽविविक्ततादवस्थ्यं अतो विष-यस्य ज्ञानयोर्व्विशिष्टज्ञाने प्रकारतासम्बन्धः समूहालम्बने च विशेष्यताख्यः सम्बन्धो भेदक इति, नन्वसदेवसामानाधिकरण्यं तत्र प्रसिद्धं इत्यत आह असत्ख्यातिनिरासादिति, ननु पूर्व्वप्रतीतस्य

ईश्वरतादृशज्ञानजन्यत्वस्यातिप्रसञ्जकत्वात् अत-एव व्याप्तिविशिष्टे पक्षधर्मता तज्ज्ञानं वा इत्यादिक-मपास्तम्। व्याप्तिविशिष्टस्य पक्षधर्मस्येति द्वन्द्वाश्रय-णात् व्याप्तिविशिष्टत्वपक्षधर्मत्वावगाहिज्ञानजन्यत्वं लभ्यते पदार्थयोरभेदेऽपि पदार्थतावच्छेदकभेदेनैव प्रमाणप्रमेयेत्यादिसूत्रे अन्यत्र च द्वन्द्वस्य च दर्शनात्॥ १५॥

---

तत्र बाधेऽपि ज्ञानपर्य्यन्तस्य तत्राबाध एव इत्यत आह अवान्तरेति लक्ष्येति तथाच ज्ञानपदं प्रमापरमिति भावः, यदि चेति गन्ध-प्रागभावावच्छिन्नो घटो गन्धवान् इत्यादावित्यर्थः, उपाध्यायमते सामानाधिकरण्येनैवानुमितिरिति यदि चेत्युक्तं अव्याप्येति धूलि-पटलधूमादावित्यर्थः नन्‌ तस्याः अपि अनुमितेर्लिङ्गवत्त्वांशे भ्रमत्वं इत्यत आह लिङ्गोपहितेति॥ १४॥

अतिप्रसञ्जकत्वादिति। ननु भ्रमानुमितौ तादृशविशिष्ट-ज्ञानरूपत्वस्य परामर्शत्वस्य ईश्वरज्ञाने असम्भव एव तस्य सन्मात्रा-वलम्बत्वात् तत्कथमतिप्रसङ्ग इति चेन्न सदनुमिति स्थलीयपरा-मर्शत्वस्य ईश्वरज्ञानसाधारणतया तज्जन्ये ज्ञानमात्र एव अति-प्रसङ्गसम्भवात् अतएवेति यत एव प्रथमानुमित्यव्याप्तिः अत एव इत्यर्थः। पदार्थतावच्छेदकभेदेनेति ननु नीलघटयोरित्यत्र तादात्म्यं कुत्रान्वेति न तावद्धर्म्मिणि तत्र बाधात् नापि धर्म्मिताव-

पदार्थद्वयाभेदबोधकाच्च कर्म्मधारयाद्भेदाद्भेदोदासी-नपदार्थद्वयबोधजनकत्वेनैव द्वन्द्वस्य भेदात्। व्याप्ति-विशिष्टपदस्य धर्म्मपरतया वा व्याप्तिवैशिष्ट्यपक्षधर्म्म-तयोर्लाभात्। न चैव मालोकोवह्निव्याप्यो धूमवान् पर्व्वत इति ज्ञानजन्येऽतिप्रसङ्गः एकत्र तदुभयावगाहि-त्वस्य उक्तत्वादिति केचित् तदप्यसत् एवमपिधूमोवह्नि-व्याप्यो द्रव्यं पर्व्वतवृत्ति इति ज्ञानजन्येऽतिप्रसङ्गात् एकरूपेण (१) तदुभयावगाहित्वोक्तौ च मीमांसक-

---

च्छेदकयोः पदार्थतावच्छेदकत्वेन तत्राकाङ्क्षाविरहात् द्विवचनमत्र साधुतार्थमिति चेत् तर्हि कर्म्मधारय एवाङ्गीक्रियतां, किमर्थं द्वन्द्वस्य पदार्थतावच्छेदकपर्य्यन्तानुधावनमिति, मैवं पदजन्यपदार्थ-प्रतीतिविशेष्यरूपस्य पदार्थस्य भेदापेक्षयापदजन्यप्रतीतिविषय-भेद एव द्वन्द्वः कल्पते लाघवात् कर्म्मधारयोत्तरं द्विवचनाननु-शासनाच्च एवञ्च घटा इत्यत्रापि द्वन्द्वो न दुर्घटस्तत्र विशेष्यभेदात् प्रकृते तु प्रकारभेदादिति प्रमाणप्रमेयेत्यादि दर्शितं तेन समं यथाश्रुते द्वन्द्वानुपपत्तिर्द्रष्टव्या ॥ १५ ॥

ननु कर्म्मधारयस्थलेऽपि द्वन्द्वस्य विषयसत्वे कर्म्मधारयः पृथक् किमर्थमङ्गीक्रियत इत्यत आह कर्म्मधारयादिति

---

(१) नन्वेकधर्म्मावच्छिन्नधर्म्मिण्युभयावगाहित्वविवक्षणात् न धूमो वह्नि-व्याप्यो द्रव्यं पर्व्वतवृत्ति इति ज्ञानजन्येऽतिप्रसङ्ग इत्यत आह एकरूपेणेति।

**मतानुप्रवेशात् । मिथस्तदुभयोपश्लेषावगाहित्वस्य च परामर्शाऽव्यापकत्वात् ॥ १६ ॥**

**न च तदुभयविषयत्वनियतधर्म्मावच्छिन्नकारणता-प्रतियोगिककार्य्यताशालित्वमर्थः ॥ १७ ॥**

---

तथाचानुभवभेद एव उभयोः परस्परं भेदकः इत्यर्थः नन्वेकस्मिन्नेव चैत्रे चैत्रत्वतत्सम्बन्धानां पदजन्यप्रतिपत्तिविषयाणां भेदे कथं न द्वन्द्वः इत्यत आह व्याप्तिविशिष्टपदस्येति मीमांसकमतेति व्याप्य-वानिति शाब्दपरामर्शस्थलीयानुमित्यव्याप्तिरित्यर्थः । (१) द्वितीयं पक्षं दूषयति मिथ इति तदुभयेति व्याप्तिविशिष्टत्वपक्षधर्म्मत्वो-भयेत्यर्थं उपश्लेषः सम्बन्धः अव्यापकत्वादिति व्याप्तिविशिष्टवा-नित्यादौ कदाचित्तदङ्गीकारेऽपि व्याप्यवानित्यादौ सुतरामभावा-दित्यर्थः ॥ १६ ॥

न च तदुभयेति प्रकृतपरामर्शत्वस्य तदुभयविषयत्वव्याप्य-त्वाद्वह्निव्याप्योधूमो द्रव्यं पर्व्वतवृत्ति इत्यादौ च प्रत्यक्षं प्रति विषयत्वेन कदाचिज्ज्ञानप्रत्यक्षं प्रति ज्ञानत्वादिनोभयथापि तदुभयविषत्वव्याप्यत्वाभावादित्यर्थः ।

न च तत्प्रत्यक्षे तत्त्वेनापि कारणत्वं तच्च तदुभयविषयत्वनियत-मित्यव्याप्तितादावस्थ्यमिति वाच्यं मिश्रमते विषयस्य विशेषरूपेण कारणतायां मानाभावादिति तात्पर्य्यात् ॥ १७ ॥

---

(१) मीमांसकैर्यथावह्निव्याप्यवानयं इत्यादि व्याप्यतावच्छेदकानवगाहिपरा-मर्शादनुमितिरपलप्यते तथैवानुमित्यपलापो न्यायमतेपि स्यादिति भावः ।

पक्षधर्म्मतापदोपादानवैयर्थ्यात्। व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षधर्म्मताज्ञानं तज्जन्यमिति तु स्यात्। यद्यपि अत्रापि इन्धनसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणेन्धनवानित्यादिपरामर्शजन्येऽतिव्याप्तिः अखण्डव्याप्तेरप्रसिद्धेः, भ्रमानुमितेर्लक्ष्यत्वे अत्राकाशमात्मन इत्यादौ सुतरां तथा, तथापि तावत्पदार्थानां तथाविधपरस्परोपश्लेषावगाहित्वमात्रं विवक्षितम्॥ १८॥

न च व्यतिरेकिण्यव्याप्तिः, व्यभिचारधीविरोधिधीविषयत्वेनान्वयव्यतिरेकव्याप्त्योरनुगमात्, भवति

---

पक्षधर्म्मतेति, न च व्याप्तिविषयत्वस्य वैयर्थ्यमेव किमिति नोद्भावितं, पक्षधर्म्मतापदस्य पक्षवृत्तित्वपरतया साधारणधर्म्मवद्धर्म्मिज्ञानादिजन्यसंशयादावतिप्रसङ्गात्, न चैवमपि व्याप्तिज्ञानप्रत्यक्षेऽतिव्याप्तिरुक्तैवेति भावः। सुतरामिति, आत्मनोऽधिकरणाभावादिति भावः, तावत्पदार्थानां व्याप्तिघटकपदार्थानां तथाविधेति व्याप्तिज्ञाने यस्य पदार्थस्य येन येन सम्बन्धेन यत्र यत्र विशेषणत्वं तेन तेन तत्र तथात्वावगाहित्वमित्यर्थः, तच्चाधिकरणे साधनीयत्वं तादृशाधिकरणीयत्वं वृत्तौ वृत्तीयत्वमभावे तादृशाभावीयत्वं प्रतियोगितायामित्याकारकमिति ध्येयम्॥ १८॥

न च व्यतिरेकिणीति तत्र पक्षधर्म्मतांशे साध्याभाव-व्यापका-

हि धूमसमानाधिकरणात्यन्ताभावाप्रतियोगिवह्निस-मानाधिकरणधूमत्वे वह्न्यभावव्यापकीभूताभावप्रति-योगित्वे वा गृहीते नियमतो वह्निव्यभिचारधीविरोधः, तथाविधधूमसमानाधिकरणत्वादिकन्तु न तथा, रास-भादौ तद्ग्रहेऽपि व्यभिचारग्रहात् व्यतिरेकसहचारेणा-न्वयव्याप्तिग्रहणाश्रयनाद्वा ॥ १८ ॥

न च भ्रमसंशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य

---

भावप्रतियोगित्वस्य प्रकारत्वादित्यर्थः ; ननु वह्न्यत्यन्ताभाव-वद्वृत्तिर्धूम इति व्यभिचारधीविरोधिनि धूमसमानाधिकरणा-त्यन्ताभावाप्रतियोगिवह्निसमानाधिरणधूमसमानाधिकरणरासभ-वानितिज्ञाने उक्तरूपसत्वात् तज्जन्य प्रत्यक्षेऽतिव्याप्तिरित्यत आह तथाविधेति न तथेति न पक्षधर्म्मतांशे व्यभिचारधीविरोधिधी-विषयः, रासभादाविति धूमे व्यभिचारविरोधेऽपि पक्षधर्म्मता-शालिनि रासभे व्यभिचाराविरोधादिति भावः ।

ननु हेतुसमानाधिकरणेत्याद्यन्वयव्याप्तेरेव व्यभिचारविरोधित्वे विवादः कथं व्यतिरेकव्याप्तौ, किञ्च धूमसमानाधिकरणात्यन्ता-भावाप्रतियोगिवह्निवृत्तिवाच्यत्ववद्धूमवानिति ज्ञानजन्येऽनुव्यव-सायेऽतिव्याप्तिः तस्य पक्षधर्म्मतांशे व्यभिचारधीविरोधित्वात्, सामानाधिकरण्याविषयत्वेन च अनुमित्यजनकत्वादित्यरुचेराह व्यतिरेकसहचारेणेति ॥ १८ ॥

हेतुतामते तत्रातिव्याप्तिः, तथाविधनिश्चयत्वेन तस्य हेतुताया विवक्षितत्वात्, विशेषदर्शनस्य च भ्रमाविरोधित्वेन तत्त्वमित्युक्तत्वात् । अतएव लिङ्गत्वादिलक्षणातिदेशवाक्यार्थज्ञानजन्योपमितौ नातिव्याप्तिः तथाविधवाक्यार्थप्रतिसन्धानेन च तस्य हेतुत्वात् ॥ २० ॥

न च उपनयार्थज्ञानजन्यन्यायार्थज्ञाने, तच्छब्देन शङ्कितशब्दान्तरेण वा व्याप्यादिविशिष्टोपस्थितिद्वाराजनिते शाब्दबोधेऽतिव्याप्तिः । व्युत्पादयिष्यते हि महावाक्यार्थज्ञानस्यावान्तरवाक्यार्थधीजन्यत्वं तदादेश्च विशेषरूपेणोपस्थापकत्वमिति वाच्यं तदातिरिक्तस्य पदजन्यत्वस्य कारणतावच्छेदकेऽनुप्रवेशात् निश्चयत्वस्याप्रवेशाच्च ॥ २१ ॥

---

हेतुतामत इति मिश्रमत इत्यर्थः उपाध्यायमते विशेषदर्शनस्योत्तेजकत्वात्, स्वमते तु यत्कोटिव्याप्यदर्शनं तस्य तदभावकोटिबाधकत्वात् इत्युक्तत्वादिति मिश्रैरित्युक्तत्वादिति भावः । संशये सति व्यावर्त्तकधर्म्मदर्शने वा अन्धकारस्थलीयघटादिसंशयोत्तरमालोकादिसमवधाने वा एवं कुङ्कुमे गन्धसंशयानन्तरं तैलादिसमवधाने वा प्रत्यक्षस्य जायमानत्वात्तथैव हेतुत्वमिति, तथाविधेति अतिदेशवाक्यार्थज्ञानत्वेनेत्यर्थः ॥ २० ॥

न्यायेति प्राचीनमतेनेदम् स्वमते तु न्यायेन विशिष्टवैशिष्ट्य-

न च तथापि तत्तद्विशिष्टवैशिष्ट्यज्ञानं प्रति तद्विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वात्, तादृशशाब्दबोधे प्रत्यक्षे च अतिव्याप्तिः, दण्डो रक्तो न वेति संशये रक्तदण्डवानयम् इति ज्ञानानुदयादिति वाच्यम् ॥ २२ ॥

---

ज्ञानाजननादुपनयनिगमनाभ्यां जनिते बोधे अतिव्याप्तिर्बोध्या, ननु ग्रन्थकारमते महावाक्यार्थज्ञानं प्रति अवान्तरवाक्यार्थज्ञानं न कारणमित्यत आह तच्छब्देनेति, ननु प्राचीनमते बुद्धिस्थत्व-प्रकारेणैवान्वयबोधः विशेषप्रकारेणान्वयबोधस्तु प्रयत्नसाध्यः, इत्यत आह सङ्केतितेति पदजन्यत्वस्येति बन्धूपदर्शितकलायाद्युप-स्थितेर्व्वारणाय तस्यावश्यं वाच्यत्वादिति भावः। ननु पदज्ञानं करणं पदार्थज्ञानं व्यापारः पदपदार्थज्ञानयोश्च यस्येति पदज्ञानस्य स्मरण एव जनकत्वात्, तस्य च संशयात्मकत्वेन ज्ञानत्वस्यैव समुचितत्वादिति भावः ॥ २१ ॥

शाब्दबोध इति पूर्व्वं खण्डवाक्यार्थज्ञानत्वावच्छिन्नहेतुता-मादायातिव्याप्तिर्दत्ता इदानीं तु प्रत्यक्षादिसाधारणतत्तद्विशेष-णतावच्छेदकप्रकारकहेतुतामादाय इति विशेषः। एवमुप-मितावपि बोध्यं तत्र विवादश्च इति न लिखितं, दण्डो रक्तो न वेति, अयमाशयः विशिष्टवैशिष्ट्यज्ञानन्तावद्विशेषणमिति न्यायेन विशिष्टस्य वैशिष्ट्यमिति न्यायेन विशिष्टवैशिष्ट्यमिति न्यायेन वा रक्तदण्डवानित्यत्र द्वेधा छत्रीकुण्डली वासस्वी देवदत्त इत्यत्रैकत्व

ज्ञानोपरमेऽपि विशिष्टविषयोपधानेन इच्छाद्वेषयोः
कृतेश्च साक्षात्काराद्विशेषणविषयकाद्विशिष्टसंस्कारादे-

---

द्वयमिति न्यायेन एकविशेषणविशिष्टेऽपरविशेषणान्वय इति न्यायेन च द्वेधाभिद्यते तत्र च विशिष्टस्य वैशिष्ट्यविषयकरूपं यदनुभवसाक्षिकं विशिष्टवैशिष्ट्यज्ञानं तत्र संशयात्मके निश्चयात्मके वा विशेषणतावच्छेदकप्रकारकानुभवसाक्षिके वैशिष्ट्यप्रकारकनिश्चयो हेतुः रक्तोदण्डो न वेति संशयानन्तरम् औचित्यावर्ज्जितो रक्तदण्डवान् न वेति संशयः स तु विशेषणमिति न्यायेनैव जायते अतएवातिरिक्ते विशिष्टवैशिष्ट्यबोधे मानं नास्ति विशिष्टद्वयविषयकमेव ज्ञानमर्थवशसम्पन्नं विशिष्टवैशिष्ट्यरूपमिति मिश्रमतमपास्तम्। दण्डोरक्तो न वेति संशयानन्तरमजायमानस्य रक्तोदण्ड इति ज्ञानानन्तरं जायमानस्य संशयनिश्चय साधारणस्य विलक्षणज्ञानस्य दुरपह्नवत्वात् इदं पुनरत्र रक्तोदण्डो न वेति संशयानन्तरमौचित्यावर्ज्जितस्य रक्तत्वरक्तत्वाभाववद्दण्डनिरूपितवैशिष्ट्यावगाहिसंशयस्य रक्तत्वनिरूपितदण्डवैशिष्ट्यवैलक्षण्यमापाद्य रक्तदण्डनिरूपितवैशिष्ट्यावगाहिसंशयस्य रक्तत्वे निरूपितदण्डांशे वैशिष्ट्यवैलक्षण्यमापाद्य रक्तदण्डनिरूपितवैशिष्ट्यावगाहिविशिष्टबोधात्मके सुधीभिश्चिन्त्यमिति ॥ २२ ॥

इच्छाद्वेषयोर्निर्व्विकल्पकं प्रति कदाचिदिच्छाद्वेषाद्यव्यवहितप्राक्कालोत्पन्नज्ञानादेव तत्सम्भवेऽपि विनश्यदवस्थज्ञानजन्येच्छाद्यनुसरणाप्रयासादाह कृतेरिति। साक्षात्कारोऽत्र निर्व्विकल्पक-

रविशिष्टस्मरणाच्च तद्विषयकगुणानां तत्र हेतुत्वे न्यून-वृत्तेर्ज्ञानस्याप्रवेशात् ॥ २३ ॥

इच्छादितः संस्काराच्चानुमित्यनुदयात् संस्कारा-द्यन्यत्वस्य गुरुतया ज्ञानत्वेनैव तत्र हेतुत्वात् ॥२३।१॥

---

रूपः, सविकल्पकस्य विषयांशे सविकल्पकक्वतित्वांशनिर्व्विकल्प-कतः एव सम्भवात् क्वतिनिर्व्विकल्पकतः एव सम्भवात् क्वतिनिर्व्वि-कल्पकपूर्व्वं सन्निकर्षार्थमपि विषयस्मृतिस्वाकारादाह विशेषण विषयकादिति । अत्र च निर्व्विकल्पकात्मकस्मरणं सिद्धान्तविरुद्ध-मिति भावः ॥ २३ ॥

गुणानामिति । ननु विशेषणतावच्छेदकप्रकारक गुणत्वेन हेतुत्वे सत्त्वं किमित्युपेक्षितम्, विशेषण विषयकत्वमेव वा हेतुतावच्छेदकमस्तु अलं गुणत्वानुधावनेनेति चेन्न, प्रकारता-सम्बन्धेन विशेषणतावच्छेदकवत्संशयान्यत्वेन कारणत्वात्, गुणत्व-विषयित्वयोरप्रवेशात्, न च दण्ड इति स्मृतिमतः पुरुषोदण्डी न वेति संशयानन्तरं दण्डिनं पुरुषं सन्देह्मि इत्यनुव्यवसाये व्यभिचारः, विशेषणतावच्छेदक प्रकारकस्य दण्डीति निश्चयस्य तत्राभावादितिवाच्यं, नैयायिकमते प्रामाण्यस्य स्वतस्त्वापत्ति-भयेन व्यवसाय विशेषणालिङ्गित विशेष्यीयत्वस्य व्यवसायेऽनुव्यव-साये नाविषयीकरणात्, न च रक्तदण्डांशे अनुद्बुद्धसंस्कारसत्त्वात् इति वाच्यं तत्र प्रत्यक्षस्य रक्तदण्डांशे सन्निकर्षं विनैवाभावात्

न च परामर्शानुव्यवसायेऽतिव्याप्तिः सामान्यतः प्रत्यक्षविषयत्वे न तत्तद्विषयकप्रत्यक्षे तत्त्वेन कादाचित्कज्ञानादिप्रत्यक्षे ज्ञानत्वादिना तत्र हेतुत्वं न तु यावानेव तत्तदितरत्वादेर्व्विषयनिष्ठो धर्म्मः तेन तद्विषयकत्वेन च कार्य्यकारणभावः ॥

---

स्मृतेस्तूद्बोधकाभावादेवाभावात् न च तथापि विनिगमनाविरहादुपनय एव गुणत्वेन प्रयोजकत्वमस्तु विशिष्टवैशिष्ट्यबोधे तु ज्ञानत्वेनेति वाच्यं रक्तदण्डगोचरसंस्कारवतस्तल्लौकिकसन्निकर्षविधुरस्य रक्तदण्डगोचरनिर्व्विकल्पकापत्तेः न चेष्टापत्तिः उत्तरकालं विशिष्टज्ञानस्यानुभवबाधितत्वादिति सम्प्रदाय विदः। अत्रेदं चिन्त्यं रक्तो दण्डो न वेति सन्देहवतो रक्तदण्डगोचरानुद्बुद्धसंस्कारशालिनश्च रक्तदण्डवानिति विशिष्टवैशिष्ट्यबोधापत्तिर्दुर्वारैव, विशेष्यांशे लौकिकसन्निकर्षसत्त्वात् रक्तदण्डगोचरस्य सन्देहरूपस्य उपनयस्य सत्त्वात् तत्र विशिष्टवैशिष्ट्यबोधस्वीकारे पूर्व्वंत्रापि तत् स्वीकारो दुर्वारः एवं प्रकृष्टदीर्घदण्डगोचरलौकिकसन्निकर्षवतस्तत् गोचरानुद्बुद्धसंस्कारवतश्च प्रथमत एव दीर्घदण्डवानिति विशिष्टवैशिष्ट्यबोधापत्तिः सर्वेषामेव मते प्रथमतो न तत्र विशिष्टवैशिष्ट्यबोधः ज्ञानत्वेन विशिष्टवैशिष्ट्यबोधहेतुत्वे तु तद्विलम्ब इति। ननु अनुमितावपि विशिष्टवैशिष्ट्यबोधवत् संशयान्यगुणत्वेनैव हेतुत्वमस्तु लाघवादित्यत आह इच्छादित इति ॥ २३।१ ॥

मैत्रावलोकित चैत्रनिर्म्मित नीलेतर घटतद्विषय-त्वादिना तद्धेतुत्वे अनन्तकार्य्यकारणभावप्रसङ्गात् मानाभावात् अन्यथोपपत्तेश्च । अथ विशिष्टस्मरणे ऽतिव्याप्तिः नचोपेक्षान्यत्वेन तत्र हेतुत्वं उपेक्षात्वं हि न जातिः, चाक्षुषत्वादिनाजाति सङ्करप्रसङ्गात्, आंशिकत्वोपगमाच्च ॥ २४ ॥

नापि प्रवृत्तिनिवृत्त्यजनकत्वम् अजिज्ञासितविषय-त्वम् वा तादृशादपि स्मृत्युत्पादात् नापि संस्काराजनकत्वम् तज्जनकतावच्छेदकरूपान्तरापरिचयादन्योन्याश्रयप्रसङ्गात्, संस्कारानुत्पत्त्यैव अस्मरणसम्भवे स्मृतिजनकतायां तदप्रवेशाच्च नाप्यनुभवत्वेन तथात्वं

---

ननु तादृशकार्य्यान्यथानुपपत्तिरेवमानमित्यत आह अन्यथोपपत्तेश्चेति । जातिसङ्करप्रसङ्गादिति उपेक्षात्वं विहाय चाक्षुषत्वं घटप्रत्यक्षादौ चाक्षुषत्वं विहाय त्वाचादौ वर्त्तमानं उपेक्षात्वं चाक्षुषे उपेक्षाज्ञाने सङ्कीर्णमिति । चाक्षुषत्वादिव्याप्यमुपेक्षात्वं नानैव वक्तव्यं तावद्भेदकूटो निवेशनीयः इत्यत आह आंशिकत्वोपगमाच्चेति एकस्मिन्नेव ज्ञाने अंशत उपेक्षा अंशतोऽनुपेक्षा इति भावः, (१) तज्जनकतावच्छेदकरूपान्तरापरिचयादिति ॥ २४ ॥

---

(१) जातेर्व्याप्यवृत्तित्वनियततया अव्याप्यवृत्तित्वेनापादकेन अत्र जातित्वाभावः आपाद्यत इत्याशयः ।

संस्कारस्य फलनाश्यतयासकृदनुभूतस्य स्मरणोत्तर-मस्मरणप्रसङ्गात् समानाकारस्यैव फलस्य नाशक-त्वात् ॥ २५ ॥

समूहालम्बनादितो नैकैकगोचरक्रमिकस्मरणा-नुपपत्तिः, जायते च पुनः पुनः स्मरणाद्दृढतरः संस्कारः ॥

---

अन्योन्याश्रय एव हेतुः भवति हि उपेक्षान्यत्वे ज्ञाते संस्कार-जनकत्वज्ञानं तस्मिंश्च उपेक्षान्यत्वज्ञानमिति, क्वचित् रूपापरि-चयादिति पाठः तथाच अवच्छेदकाग्रहे जनकत्वाग्रह इति स्वतन्त्रं दूषणम्, ननु माभूदन्यदवच्छेदकम् उपेक्षान्यत्वमेवाव-च्छेदकं भविष्यतीत्यत आह अन्योन्याश्रयादिति।

ननु तत्त्वेन तत्त्वेनैव संस्कारजनकता, तावद्भेदकूटवत्त्वम् उपे-क्षात्वम् इति कुतोऽन्योन्याश्रय इत्यत आह संस्कारानुत्पत्त्यैवेति अस्मरणसम्भवे उपेक्षणीयास्मरणसम्भवे तदप्रवेशादिति उपेक्षा-न्यत्वस्याप्रवेशादित्यर्थः।

सकृदिति वारान्तरानुभवे च तत एव संस्कारस्य फलनाश्यत्वे प्रथमस्मरणेनैव समूहालम्बनसंस्कारनाशात्तदुत्तरं तद्विषयान्तर-स्मरणानुपपत्तिरित्यत आह समानाकारस्येति प्रथमस्मरणस्य समूहालम्बनासमानाकारत्वादिति भावः आदिपदेन घट-वद्भूतलम् ॥ २५ ॥

परित्यज्य च निश्चितव्यभिचारकं रूपं गृह्यमाणाव्यभिचारकेण कारणत्वकल्पनानुदयात् ॥ २६ ॥

इदमेव चान्यत्र सामान्यकारणतावच्छेदकत्वे वीजम् अभिहितञ्च तात्पर्य्यटीकायाम् प्रथमसूत्रे अवयवविवेचनाप्रस्तावे मिश्रैः, स्मृतीणां स्वकार्य्यविरोधिनी नाम सह भावादिति चेन्न चरमज्ञानपदस्यानुभवपरत्वात्, साक्षात्तज्जन्यत्वस्य च विवक्षितत्वादिति कश्चित् ॥ २७ ॥

---

ननु समूहालम्बनसंस्कारस्य चरमस्मरणत एव कुतो नाशः तस्यापि तदसमानाकारत्वात् तस्य कालादिना नाशोपगमे फलस्य नाशकत्वव्यभिचारः तत्त्वेन तत्त्वेन नाशकत्वे सकृदनुभूतस्यापि चरमस्मरणमेव नाशकमित्यस्वरसादाह जायते चेति, दार्ढ्यं संस्कारगतो जातिविशेषः तच्च झटिति स्मरणादिफलैरेव कल्प्यते इति भावः ।

ननु झटिति स्मरणादिकं तथाविधोद्बोधकसमवधानाद्भविष्यति न च प्रत्यक्षं तत्र मानं, तादृशजातेरतीन्द्रियत्वोपगमात् इत्यत आह परित्यज्य चेति, ननु तथापि संशयान्यत्वं तत्र जनकतावच्छेदकं न च संशयस्थले स्मृत्यापत्तिः उद्बोधकाभावात् उद्बोधकस्य च विशिष्येव कार्य्यकारणभावात् ॥ २६ ॥

न च संशयस्थले संस्कारकल्पना तस्य च नाशकादिकल्पनेति

किञ्च व्याप्यविशेष्यकात्पक्षविशेष्यकाद्वा परामर्शा-दनुमितिदर्शनात् तदुभयवैशिष्ट्यावगाहिनिश्चयत्वेन तत्र हेतुत्वं लक्षणघटकमपि तदेव एकतरविशेष्यक-ज्ञानादन्यतरविशेष्यकस्मरणाभावात् अन्यथा नियमेन स्मृतेरुभयविशेष्यकत्वप्रसङ्गात् ॥ २८ ॥

---

वाच्यं संस्कारजनकतायां तत्प्रवेशेऽपि स्मृतिजनकतायां तत्प्रवेशे गौरवादिति चेन्न अनतिप्रसक्तरूपेणैव कारणतायाः सम्प्रदाय-सिद्धत्वात् अन्यथा सत्त्वादिनापि कारणतापत्तेर्दुर्व्वारत्वादिति स्वकार्य्यविरोधिनीनां स्वकार्य्यकृतो यो विरोधी विनाशः तद्वता-मित्यर्थः, कश्चिदित्यस्वरसोद्भावनं तद्बीजन्तु साक्षात्त्वं न तावद-व्यवहितोत्तरक्षणजन्यत्वं विनश्यदवस्थपरामर्शजन्यानुमितावव्याप्तेः न तावत्तज्जन्याजन्यत्वे सति तज्जन्यत्वं परामर्शजन्यसिद्धिनाश-जन्यानुमितावव्याप्तेरित्यादिस्वयमुह्नीयम् ॥ २७ ॥

प्रकारान्तरेणापि स्मरणेऽतिव्याप्तिनिराशसम्भवे ज्ञानपदस्य किमर्थमनुभवपरत्वमित्यत आह किञ्चेति विशिष्यैव कार्य्यकारण-भाव इत्यत्र प्रथमतो हेतूनाह एकतरेत्यादि अन्यथा विशिष्य-कार्य्यकारणभावं विना अनियमेनेति क्वचित् पाठः। तत्र कार्य्यकारणभावानियमो बोध्यः एवं उभयवैशिष्ट्यावगाहिज्ञानत्वेन कारणत्वे चकारोऽस्वरससूचनाय स च पूर्व्वोक्त एव ॥ २८ ॥

समानप्रकारकत्वेनैव ज्ञानस्मरणयोः कार्य्यकारणभावात् तत्र विशिष्यैव कार्य्यकारणभावः नतूक्तरूपेण गौरवान्मानाभावाच्च इत्यपि केचित् एवञ्च विशिष्टवैशिष्ट्यबोधादौ क्वापि नातिप्रसङ्गशङ्कापि वह्न्याद्यनुमितौ वह्न्यादिव्यभिचारधीविरोधिधीविषयधर्म्मप्रकारकपक्षधर्म्मताज्ञानत्वेन हेतुतामते तु नितरां तथैव लक्षणे निवेशात् अतएव व्याप्यवत्पक्षाद्यभावज्ञानं प्रति व्याप्यवत्पक्षादिज्ञानत्वेन हेतुत्वेऽपि न क्षतिः ॥ २८ ॥

व्याप्तविषयत्वेन वा जन्यं ज्ञानं विशेषणीयम्,

---

येषां मते विशिष्टवैशिष्ट्यबोधसामान्यं प्रति विशेषणतावच्छेदकप्रकारकनिश्चयस्य न हेतुत्वं तन्मतेप्यभावबुद्धिर्व्विशिष्टवैशिष्ट्यबोधरूपैव तत्र च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानं हेतुरिति तत्र पृथगतिव्याप्तिं वारयति अतएवेति ।

अतएव उभयवैशिष्ट्यावगाहिज्ञानत्वेन हेतुत्वं विवक्षितमित्यर्थः आदिपदात् येषां मते व्याप्यविशिष्टकपरामर्शः कारणम्, तन्मते तादृशाभावस्यापि संग्रहः (१) ॥ २८ ॥

ननु उभयवैशिष्ट्यावगाहिज्ञानत्वेन हेतुत्वे वह्निव्याप्ये पर्व्वत इति ज्ञानादप्यनुमित्यापत्तिः । न च पर्व्वतस्य आधारत्वाव-

---

(१) पक्षवृत्तिव्याप्याभावस्य आधेयतया पक्षवत्व्याप्याभावस्य च संग्रह इत्यर्थः ।

एतेन स्मृतिं प्रति संस्कारद्वारा अनुभवं प्रति च साक्षाद्विशेषणधियो हेतुत्वस्य निर्व्विकल्पात्मकस्य वा स्मरणस्य अनुभवं प्रत्येव वा तस्याहेतुत्वस्य नियमतः कृतिसाक्षात्कारपूर्व्वं विषयस्मृतेश्च कल्पनात् व्याप्य-वत्पक्षादिज्ञानेऽतिव्याप्तिरित्यपि परास्तम् ॥ ३० ॥

---

गाहिज्ञानत्वेन कारणत्वम्, पर्व्वते वह्निव्याप्य इति ज्ञानाव्याप्य-त्वात् (१) एवं व्याप्यस्य आधेयत्वावगाहित्वविवक्षणेऽपि वह्नि-व्याप्यवान् पर्व्वत इत्यत्र अव्याप्तिर्बोध्या न च एकत्र तदुभयभाने प्रमाणमस्ति, न च वह्निव्याप्यवान् न वेति संशयविरुद्धोभय-वैशिष्ट्यावगाहिनिश्चयत्वेन हेतुत्वं, एतन्मते पर्व्वते वह्निव्याप्य इति ज्ञानस्य भिन्नप्रकारतया तथा, संशयाविरोधित्वात् अयं वह्नि-व्याप्यत्वावच्छेदकधर्म्मवान् पर्व्वतवांश्च वह्निव्याप्य इति ज्ञाना-दप्यनुमित्यापत्तेः। विशिष्टवैशिष्ट्यबोधविलक्षणहेतुत्वाद्युक्त-निखिलविवक्षणे न तथा, ननु स्मृतिस्थले संस्कारद्वारा कार-णत्वमनुभवे तु साक्षात्सम्बन्धेनेति सम्बन्धभेदात्कारणताभेदः इत्यतः आह निर्व्विकल्पकेति।

ननु निर्व्विकल्पकस्मरणं सिद्धान्तविरुद्धमित्यत आह अनुभव-मिति दैवादिति साध्यतावच्छेदककोटौ पक्षतावच्छेदककोटौ

---

(१) इति ज्ञानेऽव्याप्तिरिति भावः।

साध्यादेरननुगमात् एकत्रोपादानेऽन्यानुमितौ दैवाद्व्याप्तिविषयित्वाञ्च अव्याप्तिः परमवशिष्यते, सापि तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षया निरसनीया एतल्लाभायैव चानुभवार्थकं चरमज्ञानपदम् । एवञ्चान्वयव्यतिरेकव्याप्त्योः पृथक्प्रयोजकत्वेऽपि न क्षतिः ।

पर्व्वतवह्निव्याप्यवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्य्यताया वह्निव्याप्यवत्पर्व्वतनिश्चयत्वावच्छिन्न-कारणताप्रतियोगिक-व्याप्तिविषयकवृत्तिकार्य्यताया वा अवच्छेदिका ज्ञानवृत्तिः सामा-

---

वा व्याप्त्यवगाहिन्यां समूहालम्बनरूपायां वा एवं जातिघटितलक्षणकरणे ॥ ३० ॥

ननु तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजात्यपेक्षयालघुलक्षणमाह पर्व्वतेति तत्र च तादृशकार्य्यताश्रयवृत्त्येवानुभवत्वव्याप्यजातिः इह तु तादृशकार्य्यतावच्छेदिकाजातिः इति विशेषः, ननु उभयवैशिष्ट्यावगाहिनिश्चयत्वेन हेतुत्वं पूर्व्वमेव दूषितम्, न च तथापि विनिगमनाविरहात् पर्व्वते वह्निव्याप्य इति निश्चयत्वेन हेतुत्वमस्तु, परामर्शस्यामितिसमानाकारस्यैव विनिगमकत्वात्, अनुरपि विशेषोऽध्यवसायकर इति न्यायात् अनुमितेश्च पक्षविशेष्यकत्वनियमादित्यभिप्रेत्याह वह्निव्याप्यवदिति ।

नाधिकरण्येनावच्छेदिका वा या जातिस्तद्वत्त्वं वा बोध्यम् ॥ ३१ ॥

व्याप्तिभानेऽवश्यं भासमानो यस्तादृशानुमित्यविषयोऽर्थस्तदविषयत्वमात्रं वा ग्राह्यं, यां काञ्चिदनु-

---

नन्ववच्छेदकत्वमवच्छेदकत्वकोटिप्रविष्टत्वमवश्यं वाच्यं, वह्न्यनुमितित्वादेरेव कार्य्यतावच्छेदकत्वात् तथाच वह्नित्वमादाय वह्नावतिव्याप्तेरित्यत आह ज्ञानवृत्तिरिति, ननु ज्ञानानुमितित्वं यत्र कार्य्यतावच्छेदकं तत्र ज्ञानत्वस्यापि तथात्वादतिव्याप्तिस्तदवस्थैव एवं केवलवह्न्यनुमितित्वमपि नावच्छेदकं वाच्यं, तथाच परामर्शकुक्षिनिक्षिप्त ज्ञानत्वमादायातिव्याप्तिस्तदवस्थैवेति अस्वरसादाह सामानाधिकरण्येनेति, कार्य्यकारणभावज्ञाने कार्य्यतासामानाधिकरण्येन यस्याभानं इत्यर्थः। वह्नित्वज्ञानत्वादेश्च कार्य्यतावच्छेदकत्वसंस्पर्शाभावादिति भावः ॥ ३१ ॥

तादृशानुमित्यविषय इति साध्यादिवारणाय तथाच व्याप्त्यविषय इत्यत्र अभावाद्यविषयक इत्यर्थः। अयञ्च लाघवमभिप्रेत्य व्याप्त्यविषयकेत्यस्य निष्कर्षः कृतः, ननु वह्निव्याप्यवत्पर्व्वतनिश्चयत्वेनापि न हेतुत्वम्। आलोकधूमसाधारणव्याप्तेरेकधर्म्माभावात् न च वह्निव्याप्यधूमवान् पर्व्वत इति परामर्शत्वेन हेतुत्वं तदुत्तरवह्न्यनुमितित्वेन कार्य्यत्वं एवं आलोकादावपि इति वाच्यं, सर्व्वासामेवानुमितीनां तदुत्तरत्वात् न च तदुत्तरत्वे सति तत्कालीनानुमितित्वमेव कार्य्यतावच्छेदकमिति वाच्यम्,

मितिर्व्यक्तिमादाय तद्व्यक्तिसमवेतानुभवत्वान्यानुभवान्यासमवेतधर्म्मसमवायित्वमिति वा वक्तव्यम्। अनुभवत्वजात्यनङ्गीकारे तु तद्व्यक्तिसमवेतस्मरणासमवेतधर्म्मसमवायित्वं वक्तव्यम्॥ ३२॥

---

वह्निव्याप्यालोकापरामर्शाज्जायमानायां वह्निव्याप्यधूमवत्पर्व्वतावगाहिन्यां वह्न्यनुमितौ व्यभिचारात्। नच वह्निव्याप्यधूमवान् पर्व्वत इत्येतत्पर्व्वतज्ञानातिरिक्तपर्व्वतज्ञानाजन्यपर्व्वतो वह्निमानित्यनुमितित्वेन कार्य्यता उभयपरामर्शजन्यानुमितौ तु पृथगेव कार्य्यतेति वाच्यं अन्योन्याश्रयात्। तादृशपर्व्वतज्ञानाजन्यत्वे गृहीते एतत्पर्व्वतज्ञानजन्यत्वं ग्राह्यं गृहीते वास्मिंस्तद्ग्राह्यमिति। न च वह्निव्याप्यधूमवान् पर्व्वत इति परामर्शाव्यवहितोत्तरानुमितित्वमेव कार्य्यतावच्छेदकमिति वाच्यम्। अव्यवहितत्वस्य तदधिकरण-क्षणध्वंसाधिकरण-क्षणध्वंसानधिकरणत्वे सति तदधिकरण-क्षणध्वंसाधिकरणत्वरूपस्य तत्तद्व्यक्तिविश्रान्ततया तथाविधपरामर्शस्य हेतुत्वे मानाभावात् कुतस्तथाविधलक्षणावतार इत्यभिप्रेत्याह यामिति।

केचित्तु परामर्शवदनुमितित्वेन कार्य्यतामनुवर्थस्तु अव्यवहितोत्तरत्वं सम्बन्धाननुगमस्तु नदोषाय स्वरूपसम्बन्धादौ तथोपगमात्। अन्यथा घटपटत्वादिकमपि दुर्व्वचं तद्विधोत्तरटत्वम्, तच्च सर्व्वटकारसाधारणमिति घाव्यवहितटत्वं वाच्यं, तच्च प्रत्येकविश्रान्तमिति एवं शक्तिग्रहाभावे व्यवहारविलोप इति

अन्ये तु परामर्शत्वेन कारणता अनुमितित्वेन च कार्य्यता परामर्शत्वञ्च जातिविशेषः न च चाक्षुषत्वादिनासङ्करः सर्व्वत्र परामर्शस्य मानसस्यैवाभ्युपगमात्। न च तादृशजातौ मानाभावः कार्य्यकारणभावान्यथानुपपत्तेरेव मानत्वात् इत्याहुः। नवीनाः पुनः प्रकृतलक्षणं रक्षयन्तो वर्णयन्ति यत्र कुत्रचित् विशेषे एकेनैव व्याप्येन व्यापकस्यानुमितिर्जाता तत्र तादृशपरामर्शत्वेन तादृशानुमितित्वेन कार्य्यकारणभावो बाधकं विना सुघट एव, तथाच तामनुमितिमादाय जातिगर्भलक्षणं सम्यगिति। प्रत्यक्षत्वादिवारणाय तद्व्यक्तिसमवेतेति।

तथापि प्रत्यक्षत्वादिर्विषयतया कालिकविशेषणताविशेषेण-चानुमितिवृत्तित्वात् समवेतेति। अनुभवत्ववारणाय अनुभवत्वान्येति ज्ञानत्वादेर्व्वारणाय अनुभवान्यासमवेतेति ननु अनुभवान्यासमवेतेति व्यर्थं अनुभवत्वान्येति पदेनैव वारणात् अनुभवत्वत्वावच्छिन्नभेदस्य सकलानुभववृत्तिभेदपर्य्यवसन्नतया ज्ञानत्वादेरपि वारणात् (१) अनुभवत्ववृत्ति एतत्त्वमेव प्रतियोगितावच्छेदकं अत्र अनुभवत्वत्वं हि अनुभव इति ज्ञानप्रकारत्वं न तु अनुभवेतरावृत्तित्वे सति सकलानुभववृत्तित्वं अतो न ज्ञानत्वादिवारणमिति तस्यापि अनुभवान्यमहाकालवृत्तित्वात् असम्भववारणायासमवेतेति, तादृशधर्म्मस्य महाकालवृत्तित्वात् तत्रातिव्याप्तिवारणाय समवेतेति बोध्यम्॥ ३२॥

---

(१) अनुभवत्वत्वं सकलानुभववृत्तित्वं तच्च ज्ञानत्वेऽपि वर्त्तते इति ज्ञानस्यानुभवसाधारणं तदवच्छिन्नप्रतियोगिकभेदवच्च ज्ञानत्वमिति भावः।

व्याप्तिज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्य्य-
तावच्छेदकावच्छिन्ना या, विशिष्टपरामर्शत्वावच्छिन्न-
कारणता-प्रतियोगिककार्य्यता, तत्समानाधिकरणानु-
भवत्वव्याप्यजातिमत्त्वं तत्त्वमित्यपि कश्चित् ॥ ३३ ॥

परे तु पक्षधर्म्मतेत्यत्र पक्षता विशेषणं तथाच
पक्षतासहकृततादृशपरामर्शजन्यत्वमर्थः, यथोक्ताया
विशेष्याद्यभावरूपाया वा पक्षतायाः प्रत्यक्षवारणाय
परामर्शस्योपादानं तत्त्वेन जनकत्वमेकावच्छेदेन तदु-

---

व्याप्तिज्ञानत्वेति अनुमितौ व्याप्तिज्ञानं करणं परामर्शो व्यापार
इति करणव्यापारयोरेकमेव कार्य्यतावच्छेदकमित्यभिप्रायेणेदं
तत्राद्यं दलं व्याप्यवद्विशिष्टवैशिष्ट्यबोधादिवारणाय, द्वितीयं
तु व्याप्तिज्ञानप्रत्यक्षादिवारणाय, कश्चिदित्यस्वरसोद्भावनं तद्बी-
जन्तु व्याप्तिज्ञानत्वस्य कारणतावच्छेदकत्वमेव खण्डितमिति एवं
परामर्शस्य कार्य्यतावच्छेदकं पक्षविशेषादिघटितं व्याप्तिज्ञानस्य
कार्य्यतावच्छेदककोटौ तन्निवेशनमफलमिति ॥ ३३ ॥

पक्षतासहकृतेति मिश्रैर्विवक्षितं तच्च शब्दतः कथं लभ्यत
इत्यत आह पक्षधर्म्मतेति ।

तथाच विशिष्टज्ञानत्वेनैव विशेषणजन्यत्वमपि लभ्यत इति
भावः यथोक्ताया मिश्रमते योग्यतायाः कालघटितत्वेन,अन्यमतेऽपि
सिषाधयिषाविरहवैशिष्ट्यांशे कालस्य निवेशने च योग्यानुपलब्धि-

भयजन्यत्वञ्च विवक्षितं तेन बाधादिकालीनेन दैवात् प्रतियोगिविषयकेण परामर्शेन जन्ये पक्षतायाः प्रत्यक्षे, तदुभयसमूहालम्बने वा नातिप्रसङ्गः। तद्वृत्त्यनुभवत्व-व्याप्यजातिमत्त्वविवक्षया च नाव्याप्तिरित्याहुः तच्चि-न्त्यम् ॥ ३४ ॥

तत्करणमिति। न च व्याप्त्यादिज्ञानजन्यज्ञान-करणत्वेनेतरभेदसाधने व्याप्तिज्ञानत्वं तादात्म्यसम्ब-न्धेन व्याप्तिज्ञानमेव वा गमकं व्याप्तेरननुगमेऽपि अधि-

---

विवादादाह विशिष्याद्यभावरूपाया वेति क्रमेण व्यावृत्तिमाह तेनेत्यादि बाधादिकालीनेत्यनेनानुमितिव्युदासः प्रतियोगि-विषयकेनेति सिद्धिविषयकेनेत्यर्थः सिद्ध्यभावप्रत्यक्षे विषयतया सिद्ध्यभावस्य हेतुत्वं परामर्शस्य च सिद्धिज्ञानात्मकतया प्रति-योगिज्ञानत्वेन हेतुत्वमिति भावः तच्चिन्त्यमिति परामर्शत्वेन जन-कताविवक्षयैव उक्तक्रमेण निखिलातिव्याप्तिनिरासः ॥ ३४ ॥

इतरस्य वैयर्थ्यप्रसङ्ग एवमिकावच्छेदेनेत्यपि प्रकृते वाधितं पक्षताजन्यतावच्छेदककोटौ पक्षतावच्छेदकस्य सामानाधि-करण्यस्य तदवच्छेदकावच्छेद्यानुमितिवैलक्षण्यविशेषा विनिवेश-नीयाः परामर्शे तु तद्विरह इत्यपि बोध्यम्। व्याप्तिज्ञानत्वेन व्याप्तिज्ञानत्वाप्रवेशायाह तदात्म्यसम्बन्धेनेति न च तादृश-निश्चयत्वावच्छिन्नहेतुत्वविवक्षायां निश्चयत्वस्य ज्ञानत्वघटिततया

कस्य भागासिद्धिवारणमात्रप्रयोजनत्वादिति वाच्यम्। फलोपहितस्य लक्ष्यतया व्याप्तिज्ञानत्वादेरतिप्रसक्तत्वात् करणत्वनिष्ठव्याप्तेस्तादृशज्ञानत्वत्वाद्यनवच्छेद्यत्वाद्व्यतिरेकव्याप्तेर्गमकतया वैयर्थ्यशङ्कानवकाशाच्चेति।

लिङ्गस्यानित्यत्वेऽप्यनुमितिकरणस्य स्वरूपतः प्रत्य-

---

कथमेतदिति वाच्यम्। तत्र संशयान्यतादृशज्ञानत्वस्य विलक्षणस्यैव निवेशात् इति भावः, अधिकस्येति तादृशजातिमत्करणत्वस्य इत्यर्थः, भागासिद्धीति व्याप्तित्वस्य एकस्य अभावात् विशिष्यव्याप्तिज्ञानत्वमेव हेतुतावच्छेदकं वक्तव्यं तच्च सर्व्वानुमितिकरणावृत्तीत्यर्थः, फलोपहितेति व्याप्तिज्ञानत्वस्य स्वरूपयोग्यवृत्तितया फलोपहितेतरभेदव्यभिचारित्वात् तादृशजातिमत्करणत्वविवक्षणे तु फलोपहितकरणत्वविवक्षणान्न व्यभिचारः, तथाच व्यभिचारवारकमेव विशेषणमिति भावः। पक्षसङ्कोचनिबन्धनारुचेराह करणत्वेति तथाच यन्निष्ठा यन्निरूपिता व्याप्तिरित्यादिन्यायेनैव धूमप्रागभाववन्न वैयर्थ्यमिति भावः।

यद्यपि करणत्वस्यापि स्वरूपयोग्यतावच्छेदकतया तदपि व्याप्तिज्ञानत्वमेव, तथाच क्व यन्निष्ठेत्याद्यवकाशः तथापि तादात्म्येन व्याप्तिज्ञानमपेक्ष्य बोद्धव्यम्। यद्वा करणत्वमतिरिक्तमेव व्यतिरेकेति अनुमानेतरभेदाभावव्यापकतया उक्तहेतुप्रतियोगिकाभावनिष्ठाया ग्राह्यत्वात्। वैयर्थ्येति अखण्डाभावघटकतया न वैयर्थ्यमिति भावः।

## अथ अनुमानप्रामाण्यनिरूपणम् ।

तत्त्वचिन्तामणिः ।

अथानुमानं न प्रमाणं योग्योपाधीनां योग्यानुपलब्ध्याभावनिश्चयेऽप्ययोग्योपाधिशङ्कया व्यभिचारसंशयात् शतशः सहचरितयोरपि व्यभिचारोपलब्धेश्च लोके धूमादिदर्शनानन्तरं वह्न्यादिव्यवहारश्च सम्भा-

---

व्योपजीवकत्वं व्यवस्थापयन्नाह तच्चेति अनुमितेर्ज्ञानाकरणकज्ञानत्वेन प्रत्यक्षमिति मध्यनिवेशे तत्करणस्यापि प्रत्यक्षप्रमाणान्तर्भावः स्यादिति तन्निरस्यति तच्चेत्यपि कश्चित् ॥ ३५ ॥

इति अनुमानदीधितौ अनुमितिनिरूपणं समाप्तम् ।

---

ननु अनुमानपरीक्षायां तच्चेत्यादिग्रन्थोऽनुपयुक्त इत्यरुचेराह लिङ्गस्येति केचिदित्यस्वरसोद्भावनं तद्बीजन्तु प्रत्यक्षस्य लक्षणान्तरसम्भव इति ज्ञानाकरणकेति । ज्ञानकरणकत्वव्यभिचार्य्यनुभवत्वव्याप्यजातिमत्त्वमित्यर्थः, तेन श्रवणकरणकात्मसाक्षात्कारसंग्रहः ॥ ३५ ॥

इति दीधितिप्रसारिण्यां अनुमितिनिरूपणं समाप्तम् ।

वनामात्रात् संवादेन च प्रामाण्याभिमानादिति ना-
प्रत्यक्षं प्रमाणम् ॥ १ ॥

इति न अप्रमाणसाधर्म्येणाप्रामाण्यसाधने दृष्ट-
साधर्म्यस्यानुमानत्वात् एतद्वाक्यस्य सन्दिग्धविपर्य्य-
स्तान्यतरं प्रत्यर्थवत्त्वात् तयोश्च परकीययोरप्रत्यक्षत्वात्,
अनुमानमप्रमाणमितिवाक्यस्य प्रामाण्याप्रामाण्ययोर्व्या-

दीधितिः।

अनुमानप्रामाण्यं परीक्षितुं चार्व्वाकमतमुत्थाप-
यति अथेति अनुमानं अनुमानत्वेनाभिमतं धूमादि-
ज्ञानमसत्ख्यात्युपनीतमनुमानमेव वा सम्वादेन सम्वा-
दाभिमानेन सम्भावितस्यासतोऽनुगताकारस्य परमार्थ-
सत्स्वलक्षणमात्रसाक्षिणाध्यक्षेणानुल्लेखात् ॥ १ ॥

प्रमाप्रमासम्भावितस्य सम्भावनाकालीनानुगतविषयत्वेन असत्-
ख्यातित्वात्। निर्व्विकल्पकस्य सद्विषयतया विषयजन्यतया
औचित्यानेकविषयत्वरूपसम्वाद इत्यर्थः। परमार्थसत् वस्तुसत्
स्वं असाधारणं देशाननुगमात् परमार्थञ्च कालाननुगमात्
क्षणिकस्य अतत्वलक्षणं यस्य इत्यर्थः। अनुगतधर्म्मस्य न निर्व्वि-
कल्पकविषय इत्यर्थः।

अनुल्लेखादिति। तथाच तन्मते प्रमाणद्वयपरिगृहीतेत्यादि-
रूपसम्वादस्य प्रकृतेः अनवतार इति भावः ॥ १ ॥

घाताच्च । अपिचानुमानाप्रामाण्ये प्रत्यक्षस्याप्यप्रमाण-त्वापत्तेः, प्रामाण्यस्यानुमेयत्वात् स्वतश्च प्रामाण्यग्रहे तत्संशयानुपपत्तेः । व्याप्तिग्रहोपायश्च वक्ष्यते ॥ २ ॥

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानप्रामाण्यनिरूपणं समाप्तम् ।

---

अध्यक्षमूलकविकल्पोल्लिखितत्वाद्वा संवादः अनु-मानाप्रामाण्ये च तन्मूलकसमयनिर्णयाद्यधीनप्रवृत्ति-कयोः शब्दोपमानयोः सुतरामप्रामाण्यान्नाप्रत्यक्षं प्रमाणमित्याह इति नेत्यादि अप्रमाणसाधर्म्येण प्रमाणताप्रयोजकरूपशून्यत्वेन दृष्टसाधर्म्यस्य साधर्म्य-

---

ननु तन्मते नैतत् सम्वादलक्षणवस्तुनः क्षणिकत्वेन एक-निर्व्विकल्पकविषयस्य निर्व्विकल्पकान्तरविषयत्वात् तदीयसम्वाद-लक्षणमाह अध्यक्षेति अध्यक्षं निर्व्विकल्पकं यथाश्रुतमूलस्यापि अनुमानमित्याद्युपक्रमान्नाप्रत्यक्षं प्रमाणमित्याद्युपसंहारविरोधा-दाह अनुमानेति अप्रमानसाधर्म्यस्य अप्रामाण्यसाधने व्यभि-चारादाह अप्रमाणेति । ननु अव्यवहितमेवाभिहितं तत्त्वेत्यादिना, लिङ्गज्ञानमेवानुमानं तत्कुतः साधर्म्यस्यानुमितिकरणत्वमिति ग्रन्थ-

दर्शनस्य वा, नन्वभिहितमेव साधर्म्यप्रदर्शनं सम्भावनां भावयति सम्भावनैव च बहुशो व्यवहारहेतुरित्यत आह अनुमानमिति।

ननु न वयमापाततो भ्रमजनकत्वलक्षणमप्रामाण्यं निरूपयामो येन भ्रमस्य विषयबाधाधीनतया प्रामाण्यं सम्भाव्येतापि परन्तु प्रमाकरणत्वव्यतिरेकमत आह अपिचेति। स्वत इति न चानुगताकारासंस्पर्शिनि परमार्थसत्स्वलक्षणसाक्षिणि स्वसंवेदनसंविदितप्रामाण्ये निर्विकल्पकज्ञाने न प्रामाण्यं सन्दिह्यते परन्तु तदुत्तरभाविनि समुल्लिखितालीकानुगताकारे सविकल्पक एवेति वाच्यम्। निर्विकल्पकस्य सन्मात्रावलम्बनत्व--स्वविषयत्वप्रामाण्यावगाहित्वानामनुमानाधीनसिद्धिकत्वात्। सर्व्वमिदं सति व्याप्तिनिश्चये स्यात् स एव तु न सम्भवत्युपायाभावादित्यत आह व्याप्तीति॥ २॥

इति अनुमानदीधितौ अनुमानप्रामाण्यनिरूपणं समाप्तम्।

---

क्तन्मतं पूरयति साधर्म्म्यप्रदर्शनस्येति, अभिहितमेव उक्तमेव, साधर्म्म्यप्रदर्शनं प्रमाणताप्रयोजकरूपप्रदर्शनं, भावयति उत्पादयतीत्यर्थः, न प्रामाण्यं सन्दिह्यते इति तथाचान्यत्र सविकल्पके

## अथ व्याप्तिपञ्चकम् ।

### तत्त्वचिन्तामणिः ।

नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः न तावद्व्यभिचरितत्वं तद्धि न साध्याभाववदवृत्तित्वम् साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम् ॥ १ ॥

---

### दीधितिः ।

समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपादननिदानं व्याप्तिस्वरूपनिरूपणमारभते नन्वित्यादिना साध्याभाववदवृत्तित्वस्याव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्याह साध्यवद्भिन्नेति । साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमर्थः ॥ १ ॥

---

प्रामाण्यसंशयात् निर्व्विकल्पके स्वतः प्रामाण्यग्रहो न विरुद्ध इति भावः । सन्मात्रेत्यादिकञ्चापाततः, तन्मते सन्मात्रावलम्बनत्वादिव्यवहारस्तु सम्भावनयैव भविष्यतीति ॥ २ ॥

इति दीधितिप्रसारिण्यां अनुमानप्रामाण्यनिरूपणं समाप्तम् ।

---

साध्यवद्भिन्नावृत्तित्वमित्यस्यैव सम्यक्त्वे साध्याभावपदवैयर्थ्यमिति सार्व्वभौमदूषणमुद्धर्त्तुमाह साध्यवद्भिन्ने य इति तथाच साध्यवद्भिन्नो गुणः तद्वृत्तिसाध्याभावविशेषलाभार्थं साध्यवद्भिन्न

**साध्यवत्प्रतियोगिकान्योन्याभावा-सामानाधिकरण्यम् ॥ २ ॥**

**सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम् ॥ ३ ॥**

---

**कर्म्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह साध्यवदिति ॥ २ ॥**

---

इति तच्चाभावे अन्वितं न साध्याभाववदित्यन्तेन, तथाच न वैयर्थ्यगन्धोऽपि ।

न च घटत्वघटपटसंयोगान्यतराभाववान् पटत्वादित्यत्राव्याप्तिः साध्यवद्भिन्नघटनिष्ठसंयोगरूपसाध्याभाववति पटे पटत्वस्य वृत्तित्वादिति वाच्यम् । तत्र साध्याभावस्यातिरिक्तस्यैवाभ्युपगमादेकमात्रप्रतियोगिकाभावाभावस्यैव भावरूपत्वात् । केचित्तु साध्यवद्भिन्नस्या भेदेन सम्बन्धेन साध्याभाववति विशेषणात् कर्म्मधारयपक्षेऽपि न दोष इत्याहुः(१) ॥१॥

कर्म्मादाविति । न च साध्यवद्भिन्नवृत्तित्वविशिष्टो यः साध्याभावः तद्दवृत्तित्वमित्युक्तौ नाव्याप्तिरिति वाच्यम् । साध्याभावांशवैयर्थ्यात् साध्यवद्भिन्नवृत्तित्वविशिष्टवत्किञ्चिदधिकरणवृत्तित्वाभावोक्तावेव सामञ्जस्यात् ॥ २ ॥

---

(१) यथासन्निवेशे वैयर्थ्याभावात् अत्र साध्याभाववत एव वृत्तित्वांशे निवेशेन तत्र साध्यवद्भिन्नस्य विशेषणत्वे देशघटवृत्तित्वघटितलक्षणस्य लक्षणान्तरत्वेन न दोषः इति भावः ।

हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह सकलेति साकल्यं साध्याभाववति साध्ये च बोध्यं साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यस्तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः। अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेर्व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणायाभावद्वये प्रतियोगिव्यधिकरणत्वं बोध्यम् ॥

---

सिद्धिकर्मत्वं साध्यत्वमिति यथाश्रुतार्थपक्षीयसाध्यस्यैवेत्यभिप्रेत्य साध्यवत्पक्षेत्युक्तम् (१)।

अत्र धूमवान् वह्नेरित्यत्र साध्याभाववज्जलनिष्ठाभावप्रतियोगिन्यतिप्रसक्तिवारणाय साकल्यमिति साध्याभाववतीति साध्ये चेति साध्याभावे साकल्यदाने तत्तद्ध्रदावृत्तित्वादिरूपेण यो वह्न्यभावस्तस्यापि सकलसाध्याभावमध्ये सन्निवेशात् तावतामधिकरणस्याप्रसिद्धेः, ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षाया आवश्यकत्वात्प्रकृते च संयोगसम्बन्धावच्छिन्नप्रतियोगिताकयावदभावाधिकरणस्य जात्यादेरेव प्रसिद्धत्वादिति चेन्न धूमवान् वह्नेरित्यादौ सत्वादिना साध्याभाववति जात्यादौ

---

(१) सिद्धिरनुमितिः तद्विषयत्वं न दृष्टान्तस्य साध्यस्य तत्र पक्षता विरहादिति साध्यवत् पदेनैव साध्यवत्पक्षो लभ्यते इति भावः।

हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रति-योगिव्यधिकरणः तत्प्रतियोगित्वञ्च हेतुतावच्छेदक-रूपेण बोध्यं, तेन द्रव्यत्वादौ साध्ये विशिष्टसत्त्वादौ नाव्याप्तिः न वा विशिष्टसत्तात्वादिना तादृशाभाव-प्रतियोगिनि सत्तादावतिप्रसङ्गः॥

---

वह्न्यादेरभावादतिव्याप्तिः, घटत्वाभावादेः साध्यतायां सकल-साध्याभाववन्तः पातित्वाद्घटावृत्तित्वावच्छिन्नाभावानामधिकरणा-प्रसिद्धाव्याप्त्यापत्तेः साध्ये चेति चकारोऽनास्थायां अतएवाह साध्याभावो वेति। यद्वा सत्तावान् जातेरित्यत्र गुणकर्मा-न्यताविशिष्टसत्ताभाववति गुणादौ जातेर्वृत्तेरभावादव्याप्तेराह साध्याभावो वेति विपक्षैकदेशो यः कश्चन साध्याभाववान् तन्निष्ठा-भावप्रतियोगित्वादित्यर्थः। व्यभिचारिणि चेति रूपवत्संयोगा-दित्यादावित्यर्थः॥

हेत्वभावोऽपीत्यपिना साध्याभावसमुच्चयः। क्रमेण व्यावृत्ति-माह तेनेत्यादि तादृशेति प्रतियोगितावच्छेदकावच्छिन्नव्यधि-करणेत्यर्थः साध्याभावस्य तथात्वोपादानाच्च गुणकर्मान्यत्व-विशिष्टसत्तावज्जातिमत्वादित्यादौ। प्रतियोगिव्यधिकरणसाध्या-भाववज्जात्यादिनिष्ठाभावप्रतियोगिनि जातिमत्वे नातिव्याप्तिः। न च तत्साध्याभावस्य गुणादौ प्रतियोगिसमानाधिकरणत्वात्प्रति-योगिव्यधिकरणसाध्यतावच्छेदकावच्छिन्नाभावाप्रसिद्धेः, कुतोऽति-

साध्यवदन्यावृत्तित्वं वा केवलान्वयिन्यभावात् ॥४॥

इति श्रीमद्गङ्गेशोपाध्याये विरचिते तत्त्वचिन्तामणौ

व्याप्तिपञ्चकं समाप्तम् ।

---

यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र निर्धूमत्वादिव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिस्तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत आह साध्यवदिति ॥ ३ ॥

---

व्याप्तिरिति वाच्यम् । संयोगिएतत्वादित्यनुरोधेन वक्ष्यमानरीत्या अधिकरणविशेषनियन्त्रितस्य तस्य वक्तव्यत्वादिति। संयोगाभाववान् विभागादित्यत्राप्यव्याप्तिर्बोध्या। साध्ये साकल्याप्रसिद्धेः सकलसाध्याभावाप्रसिद्धेश्चेति क्रमेणाव्याप्तिद्वयमाह यत्रेत्यादिना, साध्याभावस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वविवक्षणादाह विपक्षो वेति ॥

इदमीश्वरभिन्नं तद्भिन्नत्वप्रकारकप्रमाविषयत्वादित्यादौ। ननु साकल्यमिहाशेषरूपं वक्तव्यमित्यत आह निर्धूमत्वेति, निर्धूमत्वस्य धूमत्वावच्छिन्नसामान्याभावस्य एकव्यक्तिमध्य एव गतत्वादाह तस्य चेति तेन यत्किञ्चित्साध्यवतोऽन्यस्मिन् साध्यवद्व्यक्त्यन्तरे वृत्तिमति धूमादौ नाव्याप्तिरिति। अव्याप्येति। सद्धेतुत्वार्थमाह तत्त्वेनेति व्याप्यत्वेनेत्यर्थः ॥ ३ ॥

**तस्य चान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रति-योगिताकत्वं व्युत्पत्तिबललभ्यम् नहि भवति नीलो घटो घटादन्य इति ॥ ४ ॥**

इति अनुमानदीधितौ व्याप्तिपञ्चकं समाप्तम् ।

---

व्युत्पत्तीति यच्छब्दसमभिव्याहृतमन्यपदादिकं प्रयुज्यते तद-र्थोऽन्वयी तदवच्छेदकं अन्वयितावच्छेदकं तदवच्छिन्नप्रतियोगिता-कत्वं व्युत्पत्तिबललभ्यमित्यर्थः । तदेव व्यतिरेकेण साधयति नहीति । ननु घटत्वस्यावच्छेदकत्वं कस्य संसर्गः, न तावत् घटत्व-घटयोः, तयोः परस्परमनन्वयादेव । न तावत् घटत्वाभावयोः घटत्वस्य पदार्थैकदेशतया आकाङ्क्षाविरहादिति चेन्न । घटा-भावयोरेव घटत्वावच्छिन्नप्रतियोगितायाः संसर्गत्वात् । घट-त्वस्य घटांशे प्रकारत्वेऽपि संसर्गतया भानमविरुद्धम् । घटा-भाववद्भूतलमित्यत्र घटाभावस्येव घटत्वावच्छिन्नप्रतियोगितायाश्च घटत्वमवच्छेदकत्वं प्रतियोगितेत्येतत् त्रितयात्मिकायाः सम्बन्ध-त्वात् । नीलस्फटिक इत्यत्र नीलसमवायिनीलसंयोगस्येव घटत्वा-वच्छिन्नप्रतियोगिता अखण्डा इत्यपि कश्चित् प्रमेयं नास्तीति प्रतीत्यनापत्तेः विशेषणताविशेषेण प्रमेयत्वघटत्वोभयानवच्छिन्न-प्रतियोगित्वाऽप्रसिद्धेः, नवीनास्तु यावन्तो विशेषणताविशेषेण अभावास्तावन्निरूपिता एकैव प्रतियोगितायावन्तश्च प्रमेयत्वेन अभावास्तावत् स्वेकैवप्रतियोगिता प्रमेयं नास्तीत्यत्रोभयावच्छिन्न-

## अथ सिंहव्याघ्रलक्षणम् ।

तत्त्वचिन्तामणिः ।

नापि साध्यासामानाधिकरण्यानधिकरणत्वं साध्यवैयधिकरण्यानधिकरणत्वं वा तदुभयमपि साध्यानधिकरणानधिकरणत्वं तच्च तत्र यत्किञ्चित्साध्यानधिकरणाधिकरणे धूमे चासिद्धम् ॥ १ ॥

---

दीधितिः ।

नापीति साध्यमसमानाधिकरणं यस्य यदधिकरणानधिकरणं साध्यं तत्त्वम् साध्यनिष्ठासामानाधि-

---

प्रतियोगितासम्बन्धेन प्रमेयत्वविशिष्टबोध (१) इति नानुपपत्तिरित्याहुः ॥ ४ ॥

इति अनुमानदीधितिप्रसारिण्यां व्याप्तिपञ्चकं समाप्तम् ।

---

प्रकृतलक्षणयोः पौनरुक्तिः शङ्कयान्यथा व्याचष्टे साध्यमिति। तथा चात्र बहुव्रीहिरुत्तरत्र तत्पुरुष इत्यभिप्रायः, यत्तदर्थयोरननुगमादाह साध्यनिष्ठेति प्रतियोगित्वं निरूपकत्वं ननु द्रव्यं सत्त्वादित्यादावतिव्याप्तिः सत्त्वस्य द्रव्यत्वसामानाधिकरण्याभाववत्त्वाभावात् सत्त्वे द्रव्यत्वनिष्ठासामानाधिकरण्यनिरू-

---

(१) प्रमेयत्वघटत्वोभयावच्छिन्नप्रतियोगिताया एव प्रमेयत्वेनावच्छेदत्वमात्रं विषयीकृत्यसंसर्गतया भानेन प्रमे नार्थस्तीति भ्रमात्मकप्रतीत्युपपत्तिरिति भावः ।

करण्यप्रतियोगित्वम् साध्यनिष्ठाधेयत्वानिरूपकाधिकरणावृत्तित्वमिति यावत् तदनधिकरणत्वमित्यर्थः साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वात्तद्वृत्तौ नातिप्रसङ्गः साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षस्तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः ॥

---

पकत्वाभावादतः साध्यनिष्ठेति केचित् वस्तुतो बहुव्रीह्यर्थघटितस्य गुरुत्वादाह साध्यनिष्ठेति । ननु साध्यनिष्ठाधेयत्वानिरूपकाधिकरणावृत्तित्वं हेतुतावच्छेदकसम्बन्धेनैव वक्तव्यम् । अन्यथा वह्निमान् धूमादित्यत्र तादृशस्वावयवे धूमस्य वृत्तेरव्याप्तिः । तथाच सत्तावान् द्रव्यत्वादित्यत्र सत्तानिष्ठाधेयत्वानिरूपकाधिकरणसामान्यादिसमवेतत्वस्य अप्रसिद्ध्याऽव्याप्तिस्ततो निष्कर्षं कुरुते साध्यनिष्ठेति । अत्राधेयत्वमपि साध्यतावच्छेदकसम्बन्धेनैव तेन वह्नेः समवायेन साध्यत्वे धूमे हेतौ सम्बन्धसामान्येन साध्यनिष्ठाधेयत्वा-निरूपकाधिकरण-जलह्रदादिनिष्ठाभावप्रतियोग्यधिकरणताके-वह्नौ अतिव्याप्तिरित्यतो व्यापकेति । यत्किञ्चिदधिकरणतामादाय महानसीयवह्न्यधिकरणतात्वावच्छिन्नाभावस्य तादृशाधिकरणत्वव्यापकत्वात्, व्यभिचारिण्यतिव्याप्तिरित्यत आह सामान्येति, तेनेति तथाच सत्तावान् द्रव्यत्वादित्यत्र सत्तानिष्ठा-

साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणकत्वञ्चर-माधिकरणत्वांशस्यानतिप्रयोजनकतया तदपहायद्वय-मेकोक्त्या अनूद्य दूषयति तदुभयमपीति ॥ १ ॥

साध्येत्यादेः साध्यं यदधिकरणानधिकरणं तत्त्वा-भावः। साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः। तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपकाधि-करणाप्रसिद्ध्या नानाव्यक्तिसाध्यके च एकसाध्य-व्यक्तिनिष्ठाधेयत्वानिरूपकाधिकरणत्वं साधनाधिकरण-व्यक्त्यन्तरस्येत्यव्याप्तिः, क्वचिद्व्यभिचारिण्यतिप्रसङ्गश्चाद्ये द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्न-

---

धेयत्वानिरूपकाधिकरणे समवेतत्वाप्रसिद्धावपि सामान्यादौ द्रव्यत्वाधिकरणत्वाभावात् नाव्याप्तिः साध्यासामानाधिकरण्यादेः साध्यानधिकरणानधिकरणत्वे पर्य्यवसानमभिप्रेत्याह अनति-प्रयोजनकतयेति अभावभेदात् यथोक्तसन्निवेशाद्यावैयर्थ्येऽपि प्रयो-जनराहित्यमित्यर्थः ॥ १ ॥

साध्यमिति प्रथमलक्षणाभिप्रायेन साध्यस्येति, द्वितीयलक्ष-णाभिप्रायेण अप्रसिद्धेति आधेयत्वनिरूपकत्वसामान्याभावमभि-प्रेत्य नानेति, यत्किञ्चिदभावमभिप्रेत्यसामान्याभावपक्षे दोषा-न्तरमाह क्वचिदिति। गुणकर्म्मान्यत्वे सति सत्तावान् जाते-रित्यत्र, अत्र च सत्तानिष्ठं यावदाधेयत्वं तदनिरूपकं सामान्याद्ये-

प्रतियोगिताकोभेदो विवक्षितस्तदा केवलान्वयिनि यदि च यत्किञ्चित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके सर्व्वत्राव्याप्तिः ॥

केचित्तु साध्यासामानाधिकरण्यं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वाभावस्तदधिकरणभिन्नत्वमर्थस्तेन धूमस्य स्वावयवे संयोगेन वह्निमति च समवायेनावृत्तावपि न क्षतिः । तादृशाभावस्य सम्बन्धान्तरेण तत्रैव वर्त्तमाने सुलभः व्यभिचारिणस्तु व्यभिचारनिरूपकाधिकरण एव तादृशि तादृशाभाववत्त्वं सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यनुभवात् । न चैवं गुणकर्म्मान्यत्वविशिष्टसत्त्वेऽव्याप्तिः, विशिष्टस्यातिरिक्तत्वात् अनतिरिक्तत्वे

ति धूमवान् वह्नेरित्यत्र त्वयोगोलकस्य तादृशत्वान्नातिव्याप्तिः । ाद्यप्रतीकस्य व्यावृत्तिमाह, तेनेति । द्वितीयस्य तदाह, वह्नितीति । तेनैवेति हेतुतावच्छेदकसम्बन्धेनैव एतच्च अभावायीति बोध्यम् । न क्षतिरिति, वह्निमान् धूमात् इत्यत्र ाव्याप्तिरित्यर्थः । तादृशाभाव इति न च गगणे एव प्रसिद्धिः, ाने तादृशहेत्वधिकरणावच्छिन्नसाध्यवद्वृत्तित्वाभावविरहात्, दृशीति हेतुतावच्छेदकसम्बन्धेन हेतुमतीत्यर्थः । ननु तादृश-

तु विशेषणविशेष्यसम्बन्धस्यैव परम्परया व्याप्तत्वात्, केवलाव्ययिनि चाव्याप्तेरभिधानं द्वितीयलक्षणाभिप्राये-णेत्याहुस्तच्चिन्त्यं सत्तायां गुणे न द्रव्यत्वसामानाधि-करण्यमिति प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसामा-नाधिकरण्यमितिप्रतीतिवत्सत्तानिष्ठद्रव्यत्वसामानाधि-करण्यावच्छेदकत्वस्य परम्परासम्बन्धेन सामानाधि-करण्यस्य वा अभावं गुणेऽवगाहते न तु सत्तायामेव द्रव्यवृत्तित्वाभावं सत्ता न द्रव्यवृत्तित्वाभाववती द्रव्य-वृत्तित्वाभावो न सत्तावृत्तिरित्यादिसर्व्वजनसिद्धप्रतीति-बाधितत्वात् बाधकाभावात्तु संयोगतदभावयोरव-च्छेदकभेदेनैकत्र प्रतीत्या तदुभयोरेकत्र सिद्धिः। अती-

---

प्रतीत्या सामानाधिकरण्यस्य प्रतियोगित्वमवगाह्यते तत्कुतो-ऽवच्छेदकस्य प्रतियोगित्वावगाहनेन निर्व्वाह इत्यत आह, परम्परा-सम्बन्धेनेति। ननु द्रव्यवृत्तित्वस्य अव्याप्यवृत्तित्ववादिनो मते द्रव्यवृत्तित्वाभावोप्यव्याप्यवृत्तिस्तत् कुतो विरोध इत्यत आह, द्रव्यवृत्तित्वाभाव इति। ननु मूले कपिसंयोगो नास्तीति प्रतीतेर्म्मूले संयोगावच्छेदकत्वाभावादिविषयत्वेनोपपत्तौ कपि-संयोगाभावोऽपि वृक्षे न सिध्येत् इत्यत आह, बाधकाभावाच्चेति। संयोगाभावो न वृक्षवृत्तिरितिप्रत्ययाभावादित्यर्थः। ननु अत्रापि

न्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारिण्यतिप्रसङ्गाच्च। तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वासम्भवेनासिद्धेः ॥ २

न च तदभाववद्वृत्तित्वेन तत्र तदनुमेयं तद्वद्वृत्ति-भिन्नत्वस्योपाधित्वात्। किञ्च इदमिदानीमितिप्रतीति-नियामकविशेषणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्य-वद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः ॥ ३ ॥

इति अनुमानदीधितौ सिंहव्याघ्रलक्षणं समाप्तम्।

---

द्रव्यवृत्तित्वाभावो न सत्त्वावृत्तिरिति प्रतीतिरसिद्धेत्यत आह, अतीन्द्रियेति। इदं गुरु आकाशाभावादित्यत्रेत्यर्थः ॥ २ ॥

ननु आकाशाभावो गुरुत्ववद्वृत्तित्वाभाववान् गुरुत्वाभाव-वद्वृत्तित्वात् इत्यनुमानात् सेत्स्यति इत्याशङ्क्य निषेधति, न चेति। तद्वद्वृत्तिभिन्नत्वस्येति अस्य उपाधेः तेजस्त्वादौ साध्यव्या-पकता साधनाव्यापकता च पक्षादौ इति न चैवंविधतर्कावतारे अतीन्द्रियसंयोगस्यापि अव्याप्यवृत्तित्वं न स्यात् इत्यत आह, किञ्चेति। न च स्वनिष्ठतादृशसामानाधिकरण्याभावानवच्छेदक-हेतुतावच्छेदकसम्बन्धीयहेत्वधिकरणीयत्वविवक्षयैव एतदुद्धार इति वाच्यम्। विकल्पासहत्वात् तथाहि स्वनिष्ठं यत्सामानाधि-

करण्यं तदभावस्य अनवच्छेदकत्वं हेत्वधिकरणस्येत्युक्तौ वह्निमान् धूमादित्यत्राव्याप्तिः धूमवन्निष्ठं यत्सामानाधिकरण्यं तदभावस्यैव पर्व्वतरूपादिनिष्टस्य हेतुतावच्छेदकसम्बन्धीयहेत्वधिकरणपर्व्वतादेरवच्छेदकत्वात्।

अथ स्वनिष्ठो यः सामानाधिकरण्याभाव इति वाच्यम्। कालो घटवान् पटात् इत्यत्र तु पटस्यावयव एव तथा भावः प्रसिद्धः कालस्तत्रानवच्छेदक एवेति वाच्यम्। प्रमेयवान् अभिधेयात् इत्यत्र स्वरूपसम्बन्धेन हेतुतायां गगनपरिमाणादेर्हेतोर्यः स्वनिष्ठ· साध्यवद्वृत्तित्वाभावः तदवच्छेदकमेवाकाशादिकं तत्सम्बन्धावच्छिन्नहेत्वन्तराधिकरणमित्यव्याप्तेः, अथ यद्व्यक्तिनिष्ठस्तादृशवृत्तित्वाभावस्तदधिकरणस्य अनवच्छेदकत्वं वक्तव्यं तदेदं पार्थिवपरमाणुत्वाभाववत्, परमाणुत्वाभावादित्यत्र परमाणुत्वाभावस्य हेतुतावच्छेदकसम्बन्धान्येन सम्बन्धेन अधिकरणेषु कालादिष्वपि विशेषणताविशेषेण वृत्तेस्तादृशवृत्तित्वाभावो हेतावप्रसिद्ध एव इत्यलं तदेकदेशप्रतिकारेण इति ॥ ३ ॥

इति अनुमानदीधितिप्रसारिण्यां सिंहव्याघ्रलक्षणं समाप्तम्।

---

## अथ व्यधिकरणधर्म्मावच्छिन्नाभाववादिलक्षणम् ।

### तत्त्वचिन्तामणिः ।

अथेदं वाच्यं ज्ञेयत्वादित्यत्र समवायितया वाच्यत्वाभावो घट एव प्रसिद्धः व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वात् । न चैवं घट एव व्यभिचारः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वं हि व्यभिचारः न च वाच्यत्वाभाववांस्तादृशो घट इति चेत्तर्हि तादृशसाध्याभावसामानाधिकरण्याभावोव्याप्तिः तथाचाप्रसिद्धिः ।

---

### दीधितिः ।

समवायितयेति वाच्यत्वं न यथा समवायि तथा वक्ष्यते, घटादिसमवायितयेत्यर्थः इत्यप्याहुः प्रमेय-

---

### प्रसारिणी ।

समवायितयेति । ननु समवायित्वं वाच्यत्वनिष्ठप्रतियोगिताया व्यधिकरणमेव न भवति । तथाहि वाच्यत्वं तावदीश्वरेच्छा तत्र इच्छात्वादीनां समवायात्, इच्छानिरूपितसमवायप्रतियोगित्वाच्च इति द्विविधस्य समवायित्वस्य तत्र भाव इत्यत आह, वाच्यत्वमिति वक्ष्यत इति । वाच्यत्वं नेश्वरेच्छामात्रं, तथात्वे घटशब्दस्य सम्बन्धो वाच्यो रूपनिरूपितसमवाय इव

साध्यके च भावत्वेनाभावानां अभावत्वेन भावानां वह्नित्वेन निर्व्वह्नौ अवृत्तिमात्रवृत्तिगगनत्वादिना विरुद्धघटत्वपटत्वाभ्याञ्च सर्व्वत्र प्रमेयमात्रस्याभावः सुलभः ॥ १ ॥

ननु पारिभाषिकमेवाऽव्यभिचारित्वं तथाहि यत् समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकता-

---

रूपस्य इति चेन्न, तर्हि विशिष्टस्य न समवायित्वं न वा समवेतत्वमपि, वस्तुत एव तन्मते शक्तिरतिरिक्तैव इति घटशब्दस्यापि पटे शक्ततापत्तेः। अथ घटशब्दोपस्थितिरीश्वरेच्छा इति स्वयमेव प्रतिपादितमिति स्वयं शक्तिं प्रदर्शयन् प्रमेयसाध्यके व्यधिकरण-धर्म्मावच्छिन्नाभावं व्यवस्थापयति, प्रमेयसाध्यक इति लक्षणयोर्गमनन्तु ईदृशाभावानवतारेऽपि घटत्वेन वाच्यत्वाभावमादाय प्रथमस्य ज्ञेयत्वत्वेन वाच्यत्वाभावमादाय द्वितीयस्य सम्भव इति। ननु प्रमेयमात्रस्य एकोऽभावस्तथापि नायात इत्यत आह, वह्नित्वेनेति। ननु केवलान्वयिप्रमेयमात्रस्याभावो मृग्यत इत्यत आह, गगनत्वेनेति। ननु गगनत्वेनप्रमेयं नास्तीत्यत्र गगनत्वविशिष्ट-प्रमेयाभाव एव विषयो वक्तव्य इत्यत आह, विरुद्धेति ॥ १ ॥

यदित्यादि अत्र यत्पदं हेत्वभिमतपरं साध्यपरत्वे परिमाणवान् आकाशत्वात् इत्यत्र आकाशपरिमाणत्वेन परिमाणा-भावस्य तादृशस्य स्वविशिष्टहेत्वधिकरणाप्रसिद्ध्याऽव्याप्त्यापत्तेः।

वच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्व सर्व्वच वाच्यत्वाद्यभावस्य तथात्वाद्यावत्त्वोपादानम्। अतएव भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि भूतत्वमनोन्यत्वाद्यभावस्यातथात्वान्नातिप्रसङ्गः॥

साधनसमानाधिकरणस्य गोत्वाद्यभावस्य तत्तत्साध्य-

---

एतत्पदादाने वह्निमान् धूमात् इत्यादौ वह्नित्वावच्छिन्नप्रतियोगिकवह्न्यभावस्य प्रतियोगिसामानाधिकरण्याभावात् दोष इति, यद्यपि तदभावस्य कालिकसम्बन्धेन वह्निमद्वृत्तित्वात् न दोषः, तथापि अयमात्माज्ञानादित्यादावव्याप्तिर्बोध्येति। साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठा या व्याप्यता, तन्निरूपिका या व्यापकता, तदवच्छेदिका या प्रतियोगिता, यत्र यत्र साध्यतावच्छेदकावच्छिन्नं साध्यं, तत्र तत्र वर्त्तमानवृत्तिर्वा या प्रतियोगिता, तादृशप्रतियोगिताकाभावा इत्यर्थः, सर्व्वत्र व्यभिचारिण्यतिव्याप्तेरिति शेषः। तथात्वात् प्रतियोगिसमानाधिकरणत्वात्। अतएव तादृशाभावस्य यावत्त्वविवक्षणादेव, साभिप्रायं तादृशाभावस्य यावत्वे विवक्षिते उदासीनमनोन्यत्वाद्यभावमादायापि नातिव्याप्तिरिति कैमुतिकन्यायेनाह, मनोन्यत्वेति॥

ननु यत्समानाधिकरणा यावन्तोऽभावाः प्रतियोगिसमानाधिकरणा इत्येवास्तु अलं साध्यतावच्छेदकेत्यादिविवक्षणे-

व्यक्त्यभावस्य चातथात्वात् साध्यतावच्छेदकेत्यादि । येन सम्बन्धेन हेतुस्तेनैव तदधिकरणं बोध्यम् ॥ २ ॥

तेनात्मत्वे साध्ये समवायेन हेतोर्ज्ञानस्य विषयतया अधिकरणे घटादौ वर्त्तमानस्य साध्याभावस्यातथात्वेऽपि

---

नेत्यत आह, साधनसमानाधिकरणस्येति । ननु गोत्वाद्यभावस्य साध्याभाव इत्यनेनैव वारणात् आह, तत्तदिति । ननु साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावा यावत्त्वेन विशिष्यन्तां किं अवच्छेदकावच्छिन्नाभ्यां, व्यापकत्वन्तु तद्वन्निष्ठप्रतियोगिव्यधिकरणात्यन्ताभावाप्रतियोगित्वं, प्रतियोगिता च न तदवच्छेदकधर्म्मः, अपि तु अतिरिक्तैव इत्यत आह, अतएवेति । निरुक्ताभावस्य यावत्वविवक्षणादेवेति नव्याः । अतथात्वात् प्रतियोग्यसमानाधिकरणत्वात् । साध्यव्यापकप्रतियोगिका इत्युक्तेऽपि तत्रैव दोष इत्यवच्छेदकानुसरणं साध्यतावच्छेदकावच्छिन्नव्यापकप्रतियोगिकाभावा इत्यत्रापि तदभावमादायैव दोषः तद्वह्नेरपि वह्नित्वावच्छिन्नं प्रति प्रमेयत्वेन व्यापकत्वात् । एवं साध्यतावच्छेदकव्यापकप्रतियोगिताका इत्यत्रापि तद्वह्निनिष्ठप्रतियोगिताया अपि प्रमेयत्वेन वह्नित्वव्यापकत्वात् । न च साध्यतावच्छेदकावच्छिन्नप्रतियोगिताका यावदभावा इत्येवोच्यतां, प्रमेयसाध्यकाव्याप्तेरित्यादि स्वयमूहणीयम् ॥ २ ॥

तेनेति वह्निमान् धूमादित्यत्र धूमावयववृत्तिसंयोगसम्बन्धावच्छिन्नवह्न्यभावमादायापि यद्यपि व्याप्तिर्युज्यते । एव, तथापि

न क्षतिः। एवं दलान्तरेऽपि सम्बन्धभेदनिबन्धनो दोषः सम्बन्धैक्यविवक्षया निरसनीयः ॥ ३ ॥

---

तदभावस्य उत्पत्तिकाले वह्निमति, एवं द्रव्याव्याप्यवृत्तित्व-वादिमते अवच्छेदकभेदेनापि सत्त्वात्, प्रतियोगिसामानाधि-करण्यसम्भव इति, न च तथापि हेत्वधिकरणावच्छेदेन प्रति-योगिसामानाधिकरण्यविवक्षणेनैव प्रकृतनिर्व्वाह इति वाच्यम्। तादृशविशेषणानुसन्धानेऽपि साध्याभावमादायापि व्यावृत्तिरत्र इत्यभिप्रायात्। अतएव वह्निमत्त्वप्रकारकप्रमाविषयत्वाभाव-मादाय प्रयोजनमपि अनादेयं, साध्यनिष्ठव्याप्यता च साध्यताव-च्छेदकसम्बन्धेन बोध्या। तेन समवायसम्बन्धेन वह्निसाध्यके व्यभिचारिणि हेतौ साध्यनिष्ठसम्बन्धसामान्यव्याप्यता निरूपित-व्यापकतावच्छेदकप्रतियोगिताकस्य हेतुसमानाधिकरणस्य व्यधि-करणधर्म्मावच्छिन्नस्यैव अभावस्य प्रतियोगिसामानाधिकरण्येन दोषः। तथाविधवह्न्यवयवत्वाभावादौ प्रतियोगिसामानाधि-करण्याभावात्। ननु ज्ञानवान् द्रव्यत्वात् इत्यत्रातिव्याप्तिः, समवायसम्बन्धावच्छिन्नज्ञानाभावस्य विषयतया प्रतियोगिसमा-नाधिकरणत्वात्। अथ आत्मत्वसुखाद्यभावानां तादृशप्रतियोगि-सामानाधिकरण्यविरहात् नातिव्याप्तिरिति चेत्, न तथापि काले हेत्वधिकरणे सर्व्वेषामेव तादृशाभावानां प्रतियोगिसामा-नाधिकरण्यात्। अथ वक्ष्यमाणहेत्वधिकरणावच्छेदेनेत्यनेनैव तद्वारणं इति चेन्न, तथापि ज्ञानवान् आत्ममहाकालान्यतर-

त्वात् इत्यादावतिव्याप्तिरित्यत आह, एवमिति सम्बन्धैक्येति, अत्र व्यापकताघटकसम्बन्धेन प्रतियोगिसामानाधिकरण्यं विवक्षणीय-मिति व्यापकताघटकसम्बन्धसामानाधिकरण्यघटकसम्बन्धयोरैक्य-विवक्षयेत्यर्थः। तेन समवायावच्छिन्नव्यापकतावच्छेदकप्रति-योगिताकसुखाद्यभावस्य समवायेन सुखाद्यसमानाधिकरणत्वान्न दोष इति। अत्र केचित् व्यापकताघटकसम्बन्धप्रतियोगिसामा-नाधिकरण्यघटकसम्बन्धयोरैक्यविवक्षणेन किं, येन येन सम्बन्धेन यस्याभावस्तेन तेन सम्बन्धेन तदधिकरणवृत्तित्वं तदभावस्य इति विवक्षयैवातिव्याप्तेर्वारणात्। तथाहि ज्ञानवान् आत्ममहाका-लान्यतरत्वादित्यत्र समवायसम्बन्धावच्छिन्नज्ञानाभावस्य कालिक-सम्बन्धावच्छिन्नज्ञानाभावस्य च प्रतियोग्यधिकरणे महाकाले वृत्तित्वेऽपि नक्षतिरिति। तन्न कालो घटवान् पटादित्यत्राव्याप्तेः, दैशिकविशेषणतासम्बन्धेन संयोगसम्बन्धावच्छिन्नघटरूपप्रतियोग्य-नधिकरणे महाकाले वृत्तित्वात्, न च साध्यताघटकसम्बन्धेन व्यापकत्वं, प्रतियोगितावच्छेदकसम्बन्धस्य प्रवेशात्, ननु इय-मिच्छा, ईश्वरस्य ज्ञानं सविषयकत्वादित्यत्र व्यभिचाराधिकरणी-भूतेच्छाज्ञानयोर्वर्त्तमानानां तादृशाभावानां व्यापकताघटकविष-यितासम्बन्धेन सर्व्वेषामेव प्रतियोगिसमानाधिकरणत्वादति-व्याप्तिरिति चेन्न, यावन्तो व्यापकताघटकसम्बन्धास्तैस्तैः प्रति-योगिसमानाधिकरणत्वस्य विवक्षितत्वात्, तथाचेश्वरज्ञानत्वा-भावस्य इच्छान्यत्वाभावस्य वा तादृशव्यापकताघटकसमवायेन स्वरूपेण वा सम्बन्धेन प्रतियोगिसामानाधिकरण्याभावान्नाति-

रूपादिसामान्याभावे साध्ये पृथिवीत्वादिकं सद्धेतु-
रेव प्रलये परमाणावुत्पत्तिकाले चावयविनि तत्सत्त्वात् ।

---

व्याप्तिरिति । न चाभावांशे सम्बन्धविवक्षाया अभावादिति, विषयितासम्बन्धेन तत्रापि तादृशाभावोऽस्तीति वाच्यं, येन येन सम्बन्धेन निरुक्ताभावानां हेतुमति वृत्तिस्तेन तेन स्वविशिष्ट-हेत्वधिकरणावच्छेदेन तैस्तैर्व्यापकताघटकसम्बद्धैः प्रतियोग्यधि-करणवृत्तित्वस्य विवक्षणीयत्वात्, तथाच ईश्वरज्ञानत्वाभावस्य विशेषणताविशेषसम्बन्धेनेच्छावृत्तेः तेन सम्बन्धेन प्रतियोगि-सामानाधिकरण्याभावान्नातिव्याप्तिः । केचित्तु व्यापकताघटक-सम्बन्धप्रतियोगिसामानाधिकरण्यघटकसम्बन्धयोः साध्यतावच्छे-दकसम्बन्धेनैक्यं वर्णयन्ति तन्न सर्वत्र वाच्यत्वाद्यभावस्येति ग्रन्थ-विरोधात्, यत्र महाकालान्यत्वविशिष्टो घटः कालिकसम्बन्धेन साध्यः कालत्वादिति हेतुः तत्र व्यभिचारनिरूपकाधिकरणे महाकाले कालिकसम्बन्धेन तावदभावानां प्रतियोगिसामा-नाधिकरण्यसत्त्वात् अतिव्याप्तिश्चेति, अस्मन्मते तु खण्डकाल-त्वत्वावच्छिन्नाभावस्य तथाविधस्य व्यापकताघटकदैशिकविशे-षणताविशेषेण प्रतियोगिसामानाधिकरण्याभावादतिव्याप्त्यनव-काशात् इति दिक् ॥ ३ ॥

ननु प्राचां मते रूपसामान्याभावस्य साध्यतायां पृथिवीत्वं विरुद्धं तच्च युक्तिविरुद्धम्, आद्यक्षणे रूपं नास्तीतिप्रतीतिसिद्धस्य रूपसामान्याभावस्य तत्राभ्युपगन्तुमुचितत्वात् ।

**न च प्रतियोगिवत् तद्ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वं मानाभावात् ॥ ४ ॥**

---

तत् कीदृशो व्यवहार इत्यत आह रूपेति । केचित्तु प्राचां मते तत्रालक्ष्ये तन्मते एव तत्रातिव्याप्तिः, तथाहि रूपसामान्याभावस्याभावो रूपं, तच्च रूपध्वंसप्रागभावयोरप्यभावः जन्यभावस्य स्वध्वंसप्रागभावात्यन्ताभावाभावत्वाभ्युपगमात्, तथाच रूपस्वरूपाभावस्य स्वध्वंसादिसमानाधिकरणत्वात् इत्यत आह रूपेतीत्याहुः तन्न, तन्मते पृथिव्यन्यत्वाभावस्यापि तादृशत्वात् तस्य च प्रतियोगिसामानाधिकरण्याभावात्, न च तत्रापि घटवृत्तित्वविशिष्टपृथिव्यन्यत्वाभावस्य प्रतियोगी योऽभावः तत्प्रतियोगी पटे वर्त्तते पृथिव्यन्यत्वाभावोऽपि तत्र वर्त्तत इति सामानाधिकरण्यमिति वाच्यम्, तथापि पृथिव्यन्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्य तथात्वात्, न च तस्यापि उक्तप्रकारेण तथात्वं तथापि पृथिव्यन्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्य अतथात्वात्, न च तथाप्युक्ततादृशप्रमाविशेष्यत्वस्य विशेषणताविशेषरूपव्यापकताघटकसम्बन्धेन प्रतियोगिसामानाधिकरण्याभावात् । किञ्च एवं धूमवान् वह्नेरित्यत्रापि किञ्चिदधिकरणवृत्तित्वविशिष्टस्याभावरूपप्रतियोगिना धूमाभावस्य समानाधिकरणत्वात् अतिव्याप्तेः दुरुद्धरत्वादिति, प्रलये महाप्रलये, परमाणौ पार्थिवपरमाणौ, तत्सत्त्वात् रूपसामान्याभावसत्त्वात् । मानाभावादिति न च रूपात्यन्ताभावस्य रूपादित्रितयाभावात्मकत्वं व्याहतम् दृष्टत्वात्, ननु

अतएवान्तराश्यामे रक्तं रूपं नास्तीति प्रत्ययः । न चैष रक्तिमरूपध्वंसाद्यवगाही पूर्व्वापररक्तिमध्वंस-प्रागभाववति इदानीं रक्तोऽपि तथा प्रत्ययप्रस-ङ्गात् ॥ ५ ॥

---

अवयविनि उत्पत्तिदशायां रूपसामान्याभावे नाध्यक्षं प्रमाणम् इन्द्रियसम्बद्धविशेषणताया अभावात् । नाप्यनुमानम् अप्रयो-जकत्वात् इत्याशङ्का यत्र तद्धर्म्मावच्छिन्नस्य कस्यचिद्ध्वंसः कस्य चित्प्रागभावः तत्र मध्यमदशायां तद्धर्म्मावच्छिन्नध्वंसादिना विरोधाभावात् ॥ ४ ॥

सामान्याभावं व्यवस्थापयन्नाह, अतएवेति । यत एव ध्वंस-प्रागभावयोरविरोध इत्यर्थः, पूर्व्वापरेति रक्तत्वात्तथा प्रत्यय-प्रसङ्गात्, रक्तत्वावच्छिन्नप्रतियोगिताकेन संसर्गेण रक्तत्वविशिष्ट-रूपनिरूपिता या प्रकारता तच्छालीप्रत्ययप्रसङ्गादित्यर्थः, तच्च तत्र बाधितम् कस्यचिद्रक्तस्य विद्यमानत्वादिति प्रक्रान्तयत्किञ्चित् ध्वंसस्य प्रागभावस्य च तत्र विद्यमानत्वादित्यर्थः, न च रक्तं नास्तीतिप्रतीतेः रक्तत्वावच्छिन्नाभावविषयत्वं वाच्यम् । अन्तरा-श्यामेऽपि रक्तं नास्तीतिप्रतीतेरपलापप्रसङ्गात्, न हि ध्वंसप्राग-भावयोः सामान्याभावत्ववादिमतेऽपि तत्र रक्तत्वावच्छिन्नध्वंस-प्रागभावौ स्त इति । न च रक्तत्वावच्छिन्नध्वंसभ्रम एव इति वाच्यं विशेषदर्शिनोऽपि तथा बोधात् तथाच रक्तं नास्तीति-

तत्सामानाधिकरण्यञ्च स्वविशिष्टहेत्वधिकरणाव-च्छेदेन बोध्यं तेन गोत्वजन्यद्रव्यत्वप्रलयावृत्तित्वा-दिना गवादेरभावस्य गवाद्यनधिकरणदेशावच्छेदेन तद्वति काले महाकाले वा वृत्तावपि यदा गोत्वं तदा गौर्यत्र कालत्वं तत्र जन्यद्रव्यं प्रलयावृत्तिर्व्वेत्यादौ नातिप्रसङ्गः ।

---

प्रतीते रक्तत्वावच्छिन्नाभावविषयत्वं वाच्यम्, स चेदन्तराश्यामे वर्त्तते तदा गतं ध्वंसप्रागभावयोर्व्विरोधेनेति ॥ ५ ॥

तेनेत्यादि । प्रकृतहेत्वोर्व्यभिचार इत्यत्यन्ताभावाद्य न खण्ड-प्रलये ब्रह्माण्डान्तरे तदानीं गवादेः सत्त्वात् इति महाप्रलये तत् प्राक्कालादौ व्यभिचारो बोध्यः, तत्र स्थूलद्रव्याणां गवादीनां आदौ नाशः, तदनन्तरं द्व्यणुकपर्य्यन्तानां जन्यद्रव्याणां नाशः, तदनन्तरं गुणानां नाशः इत्यभ्युपगमात्, क्रमेण त्रींस्त्रीनभावानादाय प्रकृत-विशेषणाद्व्यभिचारमुद्धर्त्तुं गोत्वेत्याद्युक्तं, जन्यस्य कालोपाधित्वा-नङ्गीकर्त्तृमते अयोगोलकान्यत्वाद्यभावस्य पर्व्वताद्यवृत्तित्वात् धूम-वान् वह्नेरित्यत्र नातिव्याप्तिरिति तदुपेक्ष्य गोत्वाद्यनुधावनं, ननु सृष्टिकाले गवाद्यनधिकरणदेशावच्छेदेन गवाद्यभावो विवाद-ग्रस्तः, इदानीं भूतले गौर्नास्ति इत्यादिप्रतीत्या साधनीयः तस्याश्च भूतलादौ तत्कालीनत्वावच्छेदेन दैशिकसम्बन्धावच्छिन्न-गवाद्यभाववत्त्वं किंवा काले तादृशदेशावच्छेदेन कालिकसम्बन्धाव-च्छिन्नतदभाववत्त्वं चाविषय इति विवादात् इत्यत आह, महा-

हेतुमतिप्रलये तत्सामानाधिकरण्याभावात् । स्वविशिष्टेतिविशेषणात् कपिसंयोगाभाववान् मेयत्वा-

काल इति। एतद्विवादतत्त्वम् तु सिद्धान्तलक्षणे वक्ष्यते । महा-प्रलयाभावाभावस्य महाप्रलयात्मकस्य सृष्टिकाले प्रतियोगि-सामानाधिकरण्यामहाकालपर्य्यन्तानुधावनमिति केचित्, तन्न तस्यापीदानीन्तनध्वंसात्मककालोपाधौ प्रतियोगिमति वृत्तेः कालिकव्याप्तिं दर्शयित्वा दैशिकोमाह, यत्रेति । जन्यद्रव्यत्व-मपेक्ष्य व्यापकरूपेणापि अतिव्याप्तिं दर्शयितुं प्रलयावृत्तिर्व्वेति । त्रयाणामेव साध्याभावानाम् एकमेव प्रलयाभावमादाय विशे-षणाभावं दर्शयन्नाह, हेतुमतीति ।

ननु प्रलयान्यत्वाभावस्य तादृशस्य कथं प्रतियोगिसामानाधि-करण्यं न हि प्रलयान्यत्वाभावाभावो दैशिकसम्बन्धेन सृष्टिकाले महाकाले वा वर्त्तते येन प्रतियोगिसमानाधिकरण्यं सिध्येत, न च प्रलयान्यत्वस्यापि नित्यतया कालिकसम्बन्धेन प्रलये वृत्तेः प्रति-योगिसामानाधिकरण्यमिति वाच्यं व्यापकताघटकेन दैशिकविशे-षणताविशेषेण प्रतियोगिनोऽभावाधिकरणासम्बद्धत्वादिति चेन्न हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे येन सम्बन्धेन वर्त्तमानत्वम् अभावस्य तेनैव सम्बन्धेन व्यापकताघटकसम्बन्धावच्छिन्नप्रति-योग्यधिकरणवृत्तित्वं वक्तव्यं भवति, हि कालत्वाधिकरणे प्रलये कालिकसम्बन्धेन प्रलयान्यत्वाभावस्य वृत्तेः व्यापकताघटकसम्ब-न्धेन दैशिकविशेषणताविशेषेण प्रलयान्यत्वाऽधिकरणे महाकाले

**दित्यादौ संयोगाद्यात्मकस्य साध्याभावस्य सकलहेत्व-धिकरणावृत्तित्वेऽपि नाव्याप्तिः ॥ ६ ॥**

---

कालिकसम्बन्धेन प्रलयान्यत्वाभावस्य वृत्तित्वमित्यतिव्याप्ति-सम्भावनया विशेषणदाने च तदभावस्य कालिकसम्बन्धेनाधि-करणे प्रलये दैशिकविशेषणताविशेषेण सम्बन्धेन प्रलयान्यत्व-स्यानधिकरणत्वान्नातिव्याप्तिः । न च तथापि महाकालो घटवान् महाकालाकाशान्यतरत्वात् इत्यादौ ये ये तादृशाकाशान्यत्वा-भावादयो विशेषणताविशेषेणाकाशमात्रवृत्तयः त एव कालिक-सम्बन्धेन स्वविशिष्टयावद्धेत्वधिकरणीभूतकाले व्यापकताघटक-सम्बन्धेन प्रतियोगिसमानाधिकरणा इत्यतिव्याप्तिरिति वाच्यं, येन येन सम्बन्धेनाभावानां हेत्वधिकरणे स्ववैशिष्ट्यं तावत्सम्बन्धेन स्वविशिष्टहेत्वधिकरणावच्छेदेन व्यापकताघटकसम्बन्धावच्छिन्न-प्रतियोग्यधिकरणवृत्तित्वस्य विवक्षितत्वात् भवति, हि स्ववैशिष्ट्यं आकाशेऽपि विशेषणताविशेषेण तत्र च प्रतियोग्यधिकरणवृत्ति-त्वाभाव इति कपिसंयोगाभावेत्यादि प्राचां मते संयोगाभाव-साध्यके प्रमेयत्वं व्यभिचारीति कपीति ननु कपिसंयोगाभाव-वति द्रव्ये वर्त्तमानस्य कपिसंयोगात्मकाभावस्य प्रतियोगिताव-च्छेदकत्वात्, न च कपिसंयोगस्य प्रतियोगिसमानाधिकरणत्वात् अभावान्तरस्य च अनवच्छेदकत्वम् प्रकृतप्रतियोगिताया अक्षत-मिति वाच्यम्, प्रकृतव्यापकतायां प्रतियोगिसामानाधिकरण्या-प्रवेशस्यैव सम्यक्त्वात् तत्र तत्पदं निविश्य स्वविशिष्टपद-

दानस्य सन्दर्भविरुद्धत्वात्, न च अखण्डाभावेनावैयर्थ्यमिति वाच्यं तथापि अनतिप्रयोजनकत्वादिति चेन्न तददाने हि व्यापकत्वमीदृशाभाववादिमते निर्व्वक्तुमशक्यम्, तथा हि तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वम् न प्रतियोगिताश्रयस्य, अव्यापकत्वं तस्य तत्र व्यधिकरणधर्म्मावच्छिन्नाभावसत्त्वात् नापि प्रतियोगितायाः तादृशाभावप्रतियोगितानवच्छेदकत्वं प्रतियोगितारूपेण घटादीनामभावस्य विद्यमानत्वात्, नापि तादृशाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वं प्रकृतप्रतियोगितायाः वह्निमान् धूमादित्यत्र वह्निव्यापकतावच्छेदिकया प्रतियोगितया पर्व्वतादौ महानसीयकिमपि नास्तीतिप्रतीतिसिद्धाभावस्य वह्निमत्पर्व्वतादिनिष्ठस्य सामानाधिकरण्येन प्रतियोगितायाः प्रतियोगितावच्छेदकत्वात्, नापि तादृशाभावप्रतियोगितायाः अनतिरिक्तवृत्तिभिन्नत्वमिति वाच्यम्। वह्निनिष्ठप्रतियोगिताप्रकारेण वह्निधूमोभयाभावस्य वह्निसमानाधिकरणस्य प्रतियोगितायाः अनतिरिक्तवृत्तिरेव तादृशप्रतियोगितेति तस्या व्यापकत्वावच्छेदकत्वक्षतेः।

नाप्यन्यूनवृत्तित्वं, तादृशतत्तद्वदत्यभावनिरूपितप्रतियोगितायाः अन्यूनवृत्तित्वादेव तत्प्रतियोगितायाः, तथाच सामानाधिकरण्येन अन्यूनानतिरिक्तवृत्तियदवच्छेदकं तदन्यत्वमेव वक्तव्यम्, एवं यथा तथा निरुच्यतां तदपेक्षया प्रतियोगिताप्रकारेण उपदर्शिताभाववारणन्तु प्रतियोगिव्यधिकरणपदेनैव इति। न च घटाद्यभावस्यापि घटत्वेन प्रमेयं नास्तीत्यादिप्रतीतिसिद्धाभावा-

जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावस्तु जलत्वाद्यभावो न तु धूमाद्यभावः जलादावपि तदभाव-

भिन्नतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति वाच्यं, प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यस्यैव विवक्षितत्वात्। अन्यत्र सिद्धान्तलक्षणरीत्या अवधेयम्, व्यवहारसिद्धप्रतियोगिवैयधिकरण्याघटितव्यापकतामादाय साध्यसामानाधिकरण्यावच्छेदकेत्यादिव्यापकतामादाय वा स्वविशिष्टपददानमित्यपि केचित्। यत्तु वह्निमान् धूमादित्यत्र तार्णतार्णोभयवह्न्यभावस्यापि तादृशत्वात् तस्य च तादृशोभयवत्यवर्त्तमानस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावात् अव्याप्तिरिति स्वविशिष्टपददानमिति तन्न तादृशोभयवतोऽपि कालिकसम्बन्धादिना तादृशाभाववत्त्वे बाधकाभावात्, सत्तावान् द्रव्यत्वादित्यत्र नित्यत्वविशिष्टसत्ताभावस्य हेतुसमानाधिकरणस्य हेत्वधिकरणावच्छेदेन अवृत्तेरव्याप्तेर्वारणाय अयमात्मा ज्ञानादित्यत्रैतदात्मान्यत्वविशिष्टात्मत्वावच्छिन्नप्रतियोगिताकाभावस्य एतद्भिन्नावृत्तित्वेनाव्याप्तेर्वारणाय च स्वविशिष्टेति नव्याः।

केचित्तु इदं प्रमेयं वाच्यत्वादित्यत्र प्रमेयत्वभेदस्य तादृशस्य प्रमेयत्वे वर्त्तमानस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावात् उभयोरेव लक्षणयोरव्याप्तिरिति स्वविशिष्टपदमित्याहुः ॥ ६ ॥

ननु धूमवान् वह्नेरित्यत्रातिव्याप्तिः धूमाभावे जलवृत्तित्व-

प्रत्ययप्रसङ्गात् । यत्समानाधिकरणानां साध्यताव-
च्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगि-

---

विशिष्टगोत्वाभावो नास्तीतिप्रतीतिर्धूमाभावस्वरूपालम्बनत्वस्य सम्प्रदायसिद्धत्वेन धूमाभावस्य गोत्वाभावप्रतियोगिसामानाधिकरण्यादित्यत आह, जलादिवृत्तित्वेति जलादावपीति । न च धूमाभावस्य तादात्म्येन गोत्वाभावाभावरूपत्वमिति कुतोऽति-प्रसङ्गसम्भव इति वाच्यम् अनन्ताभावानां तादात्म्येन तादृशगोत्वाभावाभावरूपत्वकल्पनमपेक्ष्य एकस्यैव जलत्वाभावस्य तथात्वं कल्प्यते लाघवादित्यभिप्रायात् । ननु धूमवान् वह्नेरित्यत्र तथापि अतिव्याप्तिर्धूमवद्वृत्तित्वविशिष्टगोत्वाभावस्य उक्तन्यायेनधूमाभावाभावतया तस्य च गोत्वाभावरूपप्रतियोगिसामानाधिकरण्यात्, न च संयोगात्मकव्यापकताघटकसम्बन्धेन प्रतियोग्यसामानाधिकरण्यान्न तथेति वाच्यम् अयोगोलकनिष्ठसंयोगिपदार्थधूमान्यतरयोर्धूमवद्वृत्तित्वविशिष्टत्वेन रूपेण योऽभावः सोऽपि धूमाभावसमनियत इति, अतिव्याप्तितादवस्थ्यादिति समनियताभावभेदाभिप्रायेणैवेदं वाच्यं, तच्च स्वासम्मतम् इत्यस्वरसात्, स्वमते लक्षणान्तरमाह, यदिति । तथाचोक्ताभाववारणाय प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमवश्यं वाच्यं, तथाच सत्तावान् जातेरित्यत्राव्याप्तिर्द्रव्यवृत्तित्वविशिष्टसत्ताभावस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वात् तस्य च तादृश-

ताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्न-सामानाधिकरण्यं तत्त्वं वा तत् ज्ञेयत्वत्वादिना वाच्यत्वादीनामभावः सुलभ एव। शेषं दर्शितदिशावसेयम् अत आह प्रतियोग्यवृत्तिश्चेति ॥ ७ ॥

---

प्रतियोगिसामानाधिकरण्याभावात्। अतः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नेत्यादि, नन्वत्र व्यापकतावच्छेदकेति त्यज्यतामिति चेत्, लघुसमनियतगुरुसाध्यतावच्छेदकावच्छिन्नाभावाप्रसिद्ध्याव्याप्तिः तत्पददाने तु लघुना व्यापकतावच्छेदकरूपेणावच्छिन्नप्रतियोगिताकत्वमभावस्य इति नाप्रसिद्धिरिति केचित्। प्रत्यवयवव्यावृत्तिस्तु पूर्व्ववत् बोध्या, रूपपदन्तु व्यापकतावच्छेदकपर्य्याप्त्यधिकरणतालाभार्थं तेन तत्तद्वह्नित्वस्य वह्नित्वस्य रूपत्वेऽपि न व्यापकतावच्छेदकत्वमिति वाच्यत्वादीनामित्यादिपदेन ज्ञेयत्वत्वेन घटाद्यभावोऽपि द्रष्टव्यः।

शेषमिति सम्बन्धादिनैयत्यमित्यर्थः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका यावत्यः प्रतियोगिताः प्रत्येकं तद्विशिष्टसामानाधिकरण्यं विवक्षणीयं, तथाच धूमादिनिष्ठा या तादृशी प्रतियोगिता तद्विशिष्टसामानाधिकरण्याभावात् नातिव्याप्तिरिति पूर्व्वलक्षणमपि निर्दोषम् इति नवीनाः।

अथैतल्लक्षणं व्यधिकरणधर्म्मावच्छिन्नाभावानङ्गीकारेऽपि सुस्थं सर्व्वत्र साध्यतावच्छेदकावच्छिन्नसाध्यादिभेदमादायैव निर्व्वाहात्,

तथाच प्रतियोग्यवृत्तिश्चेत्यादेरवतारणं विरुद्धम् इति चेत् ईदृश-लक्षणे नञर्थस्य बहुशः प्रविष्टत्वात्, तस्य च व्यधिकरणधर्म्मावच्छिन्नाभावतो वैलक्षण्यार्थं विशेषणस्यावश्यकत्वात् इति चेदत्र वह्नित्वेन धूमाभाववति किमपि धूमवद्वृत्तिर्नास्तीतिप्रतीति-सिद्धाभावस्य धूमाभावाभिन्नतया तस्य च वह्नित्वावच्छिन्नवह्नि-समानाधिकरणतया वातिव्याप्तिः, न च पर्व्वते वह्निकाले धूमस्य प्रागभावदशायां धूमो नास्तीतिप्रतीतिर्वर्त्तते तदानीं च वह्नित्वेन धूमवद्वृत्तिसत्ता तदभावस्य च धूमाभावन्यूनवृत्ति-त्वात् क्वाभेद इति वाच्यं वह्नित्वेन धूमकालोपहितधूमवद्वृत्ति किमपि नास्ति इतिप्रतीतिसिद्धाभावमादाय तथापि तद्दोष-तादवस्थ्यात् न चायोगोलकान्यत्वाभावमादायातिव्याप्तिरुद्धार इति वाच्यम् अयोगोलकमात्रवृत्तिर्यो भेदः तदयोगोलकान्यत्वा-न्यतरत्वरूपेणायोगोलकान्यवृत्तिकिमपि नास्ति इतिप्रतीति-सिद्धाभावस्य तादृशान्यतरत्वावच्छिन्नसामानाधिकरण्यस्य सत्वा-दतिव्याप्तितादवस्थ्यात् एवं लक्ष्यान्तरमपि ऊह्यम् इत्याहुः । अत्र वदन्ति, वह्नित्वेन किमपि धूमवद्वृत्ति नास्तीतिप्रतीतौ दण्डेन पुरुषो नास्तीत्यत्रेव विशिष्टधर्म्म एव प्रतियोगितावच्छेदको न तु शुद्धवह्नित्वम् । न च धूमवद्वृत्तिकिमपि नास्तीत्यंशे तादृश-निखिलस्यैव प्रतियोगित्वावगाहनेनान्यांशे वह्नित्वविरहेण च शुद्ध-वह्नित्वस्यैवावच्छेदकत्वम् इति वाच्यं सर्व्वत्राभावप्रतीतौ यावत् प्रतियोगिनोऽभावेन प्रमाणाभावात् सामान्यलक्षणयोर्दुर्व्वारत्वा-पत्तेरिति ॥ ७ ॥

केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरणस्य साध्याभावस्य प्रतियोगिताया अनवच्छेदकं हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्रतियोगिव्यधिकरणस्य वा अभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः

---

चक्रवर्त्तिलक्षणमाह, केचिदिति। इदं कपिसंयोगी एतत्त्वादित्यत्राव्याप्तिवारणाय व्याप्यवृत्तेरिति वह्नित्वेन रूपेण ह्रदत्वाभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणाय साध्येति, अत्र प्रतियोगिव्यधिकरणपददाने इदं वाच्यं प्रमेयत्वादित्यत्र प्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्धिरिति तदुपेक्षितमिति ध्येयम्। ननु वह्नित्वावच्छिन्नह्रदत्वाभावेन समं ह्रदत्वावच्छिन्नवह्न्यभावस्यैक्यात् साध्याभावात्मकस्य तस्य प्रतियोगितावच्छेदकमेव वह्नित्वमित्यव्याप्तमतः समनियताभावानामैक्यमते लक्षणमाह, हेतुसामानाधिकरणस्येति। ननु व्याप्यवृत्तित्वं न स्वसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वं रूपव्यापकतालक्षणोक्तदूषणग्रासात् इत्यभिप्रेत्याह प्रतियोगिव्यधिकरणस्य वेति। ननु प्रतियोगिवैयधिकरण्यं यदि प्रतियोगिसमानाधिकरणभिन्नत्वं तदा व्यधिकरणधर्म्मावच्छिन्नाभावस्य तावतैरवारणं सामानाधिकरण्येनेति व्यर्थम्, एवं प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणभिन्नत्वोक्तावपीति चेत् अन्यूनानतिरिक्त-

एवञ्च व्याप्तेरव्यभिचाररूपतापि सङ्गच्छते हेतौ साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वस्येव साध्यतावच्छेदके हेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात्। अवच्छेदकत्वञ्चेह तत्-

---

वृत्तितत्तत्प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिसमानाधिकरणा ये ये अभावा अव्याप्यवृत्तिप्रतियोगिकाः प्रसिद्धाः तावद्भेदकूटस्य विवक्षितत्वात् तथाच तादृशव्यधिकरणधर्म्मावच्छिन्नाभावमादायाव्याप्तिरिति, सामानाधिकरण्येनेति। ननु तथापि वह्निमान् धूमादित्यत्राव्याप्तिः वह्नित्वेन वह्निधूमोभयाभावस्य प्रतियोगितायाः सामानाधिकरण्येन वह्नित्वाद्यवच्छेद्यत्वात् इति चेत् प्रतियोगिताया अन्यूनवृत्ति यदवच्छेदकं तदन्यत्वस्योक्तत्वात्, अवच्छेदकपददानाच्च, महानसीयवह्न्यभावप्रतियोगिताया अन्यूनवृत्तित्वेऽपि वह्नित्वस्य न क्षतिः, वह्नित्वावच्छिन्नवह्निधूमोभयाभावस्य वह्नित्वावच्छिन्नवह्निसमानाधिकरणत्वात् प्रतियोगीत्यादिपदेनैव वारणमित्यपि कश्चित्।

एवञ्चेति। तथाचाव्यभिचारस्य पारिभाषिकतानिर्व्वचनेऽपि न क्षतिरित्यन्यलक्षणेभ्यो वैलक्षण्यमिति भावः। साध्यतावच्छेदक इति। न च साध्यतावच्छेदके तादृशसाध्याभावप्रतियोगितावच्छेदकत्वाप्रसिद्धिरिति वाच्यम्। वाच्यत्वत्वघटाभ्यां वाच्यत्वं नास्तीति प्रतीत्या तत्सत्वात्। ननु विशिष्टवह्न्यभावस्य विशिष्टवह्नित्वमेव प्रतियोगितावच्छेदकं तच्च विवक्षितविवेकेन वैशिष्ट्य-

पर्य्याप्त्यधिकरणत्वं तेन विशिष्टवह्न्यभावस्य ह्रदत्ववह्नि-
त्वोभयावच्छिन्नाभावस्य च प्रतियोगितावच्छेदकत्वेऽपि
वह्नित्वस्य न क्षतिः। सत्त्ववति च गुणादौ संयोगाद्य-
भावोऽपि व्याप्यवृत्तिर्वक्ष्यमाणं वा प्रतियोगितावच्छेद-
कानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वमिहापि बोध्यम्।
भवति च गुणत्व-गुणावृत्तित्व-द्रव्यमात्रसमवेतत्वाद्यव-
च्छिन्नप्रतियोगिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदक-
गुणत्वाद्यनतिरिक्तवृत्त्येव संयोगत्वमित्याहुः ॥ ८ ॥

---

एव पर्य्याप्तमित्यत आह, ह्रदत्ववह्नित्वोभयेति। ननु इदं संयोगि-
सत्त्वादित्यादौ संयोगाभावस्याव्याप्यवृत्तित्वात् व्याप्यवृत्त्यभावा-
न्तरस्य प्रतियोगितानवच्छेदकत्वमेव संयोगाभावत्वस्येत्यतिव्याप्ति-
रित्यत आह, सत्त्ववतीति व्याप्यवृत्तिरिति। तथाच तदधि-
करणावच्छेदेन व्याप्यवृत्तित्वं ग्राह्यमिति भावः। अतएवारुचेराह,
वक्ष्यमाणं वेति। व्याप्तिसिद्धान्तलक्षणे वक्ष्यमाणमित्यर्थः तेन सत्ता-
वान् जातेरित्यत्र जात्यधिकरणगुणादिनिष्ठाभावप्रतियोगितावच्छे-
दकस्य विशिष्टसत्तात्वस्यानतिरिक्तवृत्तित्वेऽपि सत्तात्वस्य न क्षतिः।
ननु गुणत्वावच्छिन्नाभावस्यापि स्वमते उत्पत्तिकालावच्छेदेन
प्रतियोगिसमानाधिकरणत्वात् संयोगाभावतुल्यत्वम् अतो रूपा-
न्तरेणाभावमादाय तदाह, गुणावृत्तीति। ईदृशाभावस्तु द्रव्या-
वृत्तिस्तेन उत्पत्तिकालेऽपि गुणावृत्तिद्रव्यवृत्तिजातीनां सत्त्वादिति

साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यावच्छेदकत्वसमानाधिकरणसाध्याभावत्वकत्वम्।

यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वं वाव्याप्तिरिति तु न युक्तं सर्व्वत्र साध्याभावपदवैयर्थ्यात्। यत्तु साध्याभाव-

---

भावः। इदं संयोगिगुणान्यत्वे सति सत्वादित्यादिसाधारणसंयोगव्यभिचारिणिसत्वे यादृशरूपावच्छिन्नाभावमादाय नातिव्याप्तिः तदाह, द्रव्यमात्रेति ॥ ८ ॥

प्रगल्भीयं लक्षणमाह, साध्येति। स्वं हेत्वभिमतम् इदं गुणकर्म्मान्यत्वविशिष्टसत्तावत् सत्वादित्यत्र गुणकर्म्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाभावादीनां साध्यसमानाधिकरणत्वादतिव्याप्तिराह, साध्यतावच्छेदकावच्छिन्नेति। सामानाधिकरण्यावच्छेदकत्वं सामानाधिकरण्यानतिरिक्तवृत्तित्वं व्याप्यत्वमिति यावत्।

ननु वह्निमान् धूमादित्यत्र धूमवति वह्न्यभाववत्त्वभ्रमस्य साध्यवत्त्वज्ञानप्रतिबन्धकत्वात् अव्याप्तिरिति द्वितीयलक्षणे प्रमायामिति प्रमात्वावच्छेदेनेत्यर्थः, तेन धूमवान् वह्नेरित्यत्र व्यधिकरणधर्म्मावच्छिन्नाभावप्रमायां साध्यवत्त्वज्ञानाप्रतिबन्धकत्वेऽपि न क्षतिः। प्रमा च सर्व्वांशे बोध्या, तेन घटाभावस्य साध्यप्रतियोगिकत्वभ्रमेऽपि न क्षतिः। सर्व्वत्रेति तादृशसाध्यसामानाधिकरण्यावच्छेदकत्वसमानाधिकरणकत्वमित्यत एव प्रथमस्य, यत्समानाधिकरणप्रमात्वावच्छेदेन साध्यवत्त्वज्ञानाप्रतिबन्धकत्वम्

वति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वं व्याप्तिरिति तन्न अनुमित्यविरोधित्वज्ञानस्यानुमिति हेतुत्वे साध्याभाववद्वृत्तित्वस्यानुमित्यविरोधितया व्यभिचारिण्यतिप्रसङ्गात् ॥ ८ ॥

---

इत्यत एव द्वितीयस्य च सामञ्जस्यात्, इति साध्याभावपदं सार्थकं कर्त्तुं दूषणान्तरेण तस्यैव लक्षणं दूषयितुमुपन्यस्यति, यत्विति। यद्वृत्तौ यद्वृत्तित्वसामान्ये तेन व्यभिचारिणि-व्यधिकरणधर्म्मावच्छिन्नाभाववद्वृत्तित्वस्याविरोधित्वेऽपि नातिव्याप्तिः। विरोधित्वं विरोधिप्रमाविषयतावच्छेदकत्वं, व्यभिचारिणि तु साध्याभाववद्वृत्तित्वज्ञानत्वेनैव विरोधित्वम्, एतेन यद्वृत्तितात्वावच्छेदेन प्रकृतानुमित्यविरोधित्वम् इत्यनेनैव सामञ्जस्ये साध्याभावपदवैयर्थ्यमिति परास्तं, केवलवृत्तित्वज्ञानत्वेनैव कुत्रापि प्रतिबन्धकत्वाभावादिति भावः। अत्रेदं चिन्त्यं यथा केवलवृत्तित्वज्ञानत्वेन प्रतिबन्धकत्वं तथैतन्मते साध्याभाववद्वृत्तित्वेनापि किन्तु साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वे नैव तथा प्रसक्तेः। अथ प्रतिबन्धकता येन तेन रूपेणास्तु किन्तु हेतुनिष्ठानां साध्याभाववद्वृत्तित्वानां यावतामेव तथात्वं वक्तव्यमिति चेत् तर्हि हेतुनिष्ठवृत्तित्वानामेव तथात्वमस्तु इति साध्यपदवैयर्थ्यमत्रापि दुरुद्धरमिति। अनुमित्यविरोधित्वेति। एतद्व्याप्तिवादिमते एतद्व्याप्तिविघटकमेव प्रतिबन्धकं साध्याभाववद्वृत्तित्वज्ञानं तु न तथा

केचित्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयाः ये तत्तदधिकरणावृत्तित्वाभावास्तद्वत्त्वं, तत्त्वं साजात्यञ्च समानासमानाधिकरणधर्म्मावच्छिन्नप्रति-

---

किन्त्वनुमितिविरोधिसाध्याभाववदवृत्तित्वज्ञानमेव तथाच साध्याभाववद्वृत्तित्वस्याताट्टशत्वे व्यभिचारिण्यतिव्याप्तिरिति भावः ॥८॥

मिश्रलक्षणमेव बहुधा परिष्कुर्व्वन्नाह, केचित्त्विति। ननु समानाधिकरण–धर्म्मावच्छिन्न–प्रतियोगिताकयावन्निरूपितप्रकृतसाजात्यं व्यतिरेकिण्यप्रसिद्धमत आह, प्रत्येकमिति। ननु यावतां साध्याभावानां प्रत्येकनिरूपितं यत् साजात्यं तद्वत्त्वेकोऽप्यभाव इत्यत आह, तत्तदिति। यावत् पदस्य सजातीयपदस्य वाऽकरणेऽतिव्याप्तिस्फुटैव तत्तदधिकरणाप्रसिद्धिवैयर्थ्यञ्चेत्यतः तत्तदिति साजात्यञ्चेत्यादि। ननु केवलेन तत्तत्पदेन यावत्त्वाकर्षणे धूमाभाववान् धूमाभावात् इत्यादौ ताट्टशसाध्याभावरूप यावद्धूमाधिकरण इत्यत्र इदं वाच्यं, ज्ञेयत्वादित्यत्र प्रकृतसाध्याभावे स्वकीयप्रतियोगितासमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वतद्व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण साजात्यं वृत्तित्वाभावस्य वक्तव्यम्, तथाच स्वकीयप्रतियोगितासमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वमप्रसिद्धम्, वाच्यत्वत्वरूपेण वाच्यत्वाभावाप्रसिद्धेरिति चेत् सत्यं सम्बन्धान्तरेण वाच्यत्वत्वावच्छिन्नाभावादेः सुलभत्वात्। तथाचायमर्थः ये ये प्रकृतसाध्यतावच्छेदकसम्बन्धेनावच्छिन्नप्रतियोगिताकाः साध्याभावस्तत्प्रतियोगितासमानाधि-

योगिताकत्वान्यतररूपेण साध्याभावश्च पूर्व्वोक्तरीत्या प्रत्येतव्यः ।

व्याप्यवृत्तिश्च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो वा तेन तत्तत्साध्यव्यक्तेरव्याप्यवृत्तेर्व्वा

---

करणधर्म्मावच्छिन्नप्रतियोगिताकत्वं सम्बन्धान्तरावच्छिन्नाभावनिष्ठं प्रसिद्धं तदा दायैवान्यतरत्वस्य प्रसिद्धिरिति द्वितीयेति साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका इत्यर्थः । प्रथमरीत्या तु वह्निमान् धूमादित्यादौ वह्निघटोभयाभावसजातीयतद्वृत्तित्वाभावाभावाद्दोष इति ध्येयम् न च वह्नित्वेन पर्व्वतीयवह्निद्रव्यान्तरयोरन्यतराभावस्य साध्यतावच्छेदकेत्यादिरूपशालिनोऽधिकरणमपर्व्वतमेव, अपर्व्वतवृत्तिप्रतियोगिकताद्दशाभावश्च हेतावसम्भवीति वाच्यम् ताद्दशव्यापकतावच्छेदक रूपावच्छिन्नेत्यत्र रूपस्य प्रतियोगितायां अन्यूनवृत्तिसमानाधिकरणतया यदवच्छेदकं तदन्यत्वे नावच्छेदकत्वं वाच्यं, तच्चोभयथा अन्यूनवृत्तिसमानाधिकरणतया केवलव्यधिकरणतया वेति ।

ननु व्याप्यवृत्तित्वं पूर्व्वोक्तरीत्या दुर्व्वचम् इत्यत आह, प्रतियोगितावच्छेदकावच्छिन्नेति । प्रतियोगितावच्छेदकावच्छिन्नासमानाधिकरण इत्युक्ते व्यधिकरणधर्म्मावच्छिन्नाभावासंग्रह इत्यत आह, प्रतियोगीति । यद्यप्यत्रापि वाच्यत्वत्वरूपेण वाच्यत्वघटोभयं नास्तीतिप्रतीतिसिद्धाभावेन समं प्रमेयत्वत्वावच्छिन्नवाच्यत्वाभा-

साध्यस्याभाववति हेतोर्वृत्तावपि नाव्याप्तिः । तद्वृत्तित्वाभावस्तु तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकस्तत्तत्साध्यभाववद्वृत्तितात्वातिरिक्तसमानाधिकरण-धर्म्मानवच्छिन्नप्रतियोगिताको वा बोध्यः तेन साध्याभाववद्व्यक्तिविशेषवृत्तित्वस्य पार्थिवत्वादिविशेषितस्य द्वित्वाद्यवच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्याभावमादाय नातिप्रसङ्गः । अत्र च

---

वस्याभिन्नत्वात्, तस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसमानाधिकरणत्वादप्रसिद्धिः तथापि चक्रवर्त्तिलक्षणोक्तरीत्या प्रतियोगितावच्छेदकावच्छिन्न--प्रतियोगि समानाधि करण-भिन्नत्वं वक्तव्यं व्यासज्यवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताक इत्यनन्तरं तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्त समानाधिकरणधर्म्मानवच्छिन्नप्रतियगिताको वेति क्वचित् पुस्तके पाठः, स हि धूमवान् वह्नेरित्यत्र निर्धूमवृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकपूर्व्वक्षणवृत्तित्वविशिष्टाभावमादायातिव्याप्तिभयेन संगमनीय इति केचित् तन्न निर्धूमवृत्तित्वत्वेन निर्धूमवृत्तित्वविशिषघटान्यतराभावमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तिभयेन साध्याभावसाज्ञात्यत्वस्य प्रतियोगितासमानाधिकरणान्यूनवृत्तिभिन्नेत्याद्युक्तधर्म्मेणावश्यकवक्तव्यत्वे कुतः पूर्व्वक्षणवृत्तित्वविशिष्टाभावमादाय दोषो येनोत्तरावतारणिकादीयेतेति इत्थं वृत्तित्वत्वावच्छिन्ना-

हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं बोध्यम्। तेन वह्न्यभाववति स्वावयवे धूमस्य वृत्तावपि न दोषः, इत्थञ्च साध्याभावोऽपि हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्त्तमानो ग्राह्यः तेन जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्ध्यापि न क्षतिः ॥ १० ॥

---

भावविवक्षणमपि सम्यगिति पार्थिवत्वादिविशेषितस्येत्यन्तेन तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकस्य प्रयोजनकथनं तत्रापि व्यक्तिविशेषनिष्ठवृत्तित्वाभावमादायाधिकसंग्रहाय, पार्थिवत्वादीति विशेषितं यद्वृत्तित्वं तद्वह्नौ नास्ति वह्नेस्तैजसत्वादिति भावः।

साध्याभावोऽपि साध्यतावच्छेदकसम्बन्धेनैव बोध्यः, तेन समवायसम्बन्धावच्छिन्नाभावमादाय वह्निमान् धूमादित्यादौ न दोष इति ध्येयम्। इत्थञ्चेति हेतुतावच्छेदकसम्बन्धेन वृत्तित्वविवक्षणे सति चेत्यर्थः, तेनेति। यद्यपि वह्निमान् धूमादित्यत्र संयोगसम्बन्धावच्छिन्नप्रमेयसामान्याभावस्याधिकरणे गुणादौ संयोगसम्बन्धेन वृत्तित्वमप्रसिद्धमिति, तत्राप्यव्याप्तिर्वक्तुमुचिता, तथापि तदभावस्योत्पत्तिकालावच्छेदेन द्रव्यवृत्तित्वेन निरुक्तप्रतियोगिव्यधिकरणाद्यनुसन्धाने प्रयासगौरवमत आह, जातीति। तथाच व्यधिकरणधर्म्मावच्छिन्नजात्यभावमादायैव लक्षणगमनमिति भावः।

यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्म्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वम्। साधनस्य तादृशव्यापकताभावप्रतियोगित्वं तदवच्छेदकत्वं वा साधनतावच्छेदकस्य इति तु न वाच्यं द्रव्यं सत्वादित्यादौ सत्तादेर्गुणकर्म्मान्यत्वविशिष्टसत्तात्वाद्यवच्छिन्न-

---

ननु वह्निमान् धूमादित्यत्र तथाप्यव्याप्तिः, द्रव्यवृत्तिसंयोगसम्बन्धेन प्रमेयत्वावच्छिन्नाभावस्य गुणादौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणस्य संयोगेन सम्बन्धेन कस्यचिदधि करणे द्रव्ये वर्त्तमानस्याप्यधिकरणे गुणादौ हेतुतावच्छेदकसम्बन्धेन वृत्तित्वमप्रसिद्धमिति चेत् प्रतियोगिवैयधिकरण्यावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नपदार्थाधिकरणवृत्तित्वमित्यत्र तात्पर्य्यात् ॥ १० ॥

ननु इदं द्रव्यं गुणकर्म्मान्यत्वे सति सत्वादित्यत्राव्याप्तिः अत्रापि द्रव्यवृत्तित्वस्य गुणादौ सत्तायां सत्वात् विशिष्टस्यानतिरिक्ततयाऽव्याप्तेराह, यद्वेति। तादृशाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदक-रूपावच्छिन्नप्रतियोगिताका-व्याप्यवृत्तयश्चेत्यर्थः अत्र व्याप्यवृत्तिः पूर्व्ववद्बोध्या, धूमवान् वह्नेरित्यत्र निर्धूमजलवृत्त्यभावप्रतियोगित्वाद्गङ्गावतिव्याप्तेराह, व्यापकीभूतस्येति। रूप-

प्रतियोगिताकतादृशाभावप्रतियोगित्वात् अतिव्याप्तिः च्चेयं, प्रमेयादित्यादौ प्रमेयत्वादेस्तादृशप्रतियोगितानवच्छेदकत्वात् अव्याप्तिश्च प्रमेयत्वव्यधिकरणप्रतियोगित्वस्याप्रसिद्धेः ।

यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्तत्प्रतियोगितावच्छेदकेन धर्म्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वमित्याहुः । परे तु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः ॥ ११ ॥

---

वत्संयोगादित्यत्राव्याप्तेराह, व्याप्यवृत्तेरितिक्रमेण प्रयोजनमाह, द्रव्यं सत्त्वादित्यादावित्यादि ।

इतोऽपि लघुलक्षणमाह, यद्वेति । भिन्नान् प्रत्याक्षेपविजृम्भितमिदं यत् सजातीयपदादानेऽपि तदेकदेशेनापि निर्व्वाह इति, न चात्रापि यावद्भिस्तादृशव्यापकतावच्छेदकैः यद्रूपावच्छिन्नं प्रतिव्यापकत्वमवच्छिद्यते इत्यनेनैव सामञ्जसमिति वाच्यं यथोक्तविशेषणविशेष्याभावे न वैयर्थ्यमितिभावात्, कूटपदादानेऽपि सार्व्वभौमीयं लक्षणं परिष्कुर्व्वन्नाह, परेत्विति । अत्र वह्निमान् धूमादित्यादौ व्यधिकरणधर्म्मावच्छिन्नवह्न्यभाववज्जगद्वृत्तित्वत्वसमनियतप्रतियोगिताका ये येऽभावास्तावदाश्रयत्वं, निर्व्वह्निवृत्तित्वत्वसमनियतप्रतियोगिताका ये येऽभावाः, तावदाश्रयत्वमिति

येन सम्बन्धेन हेतुता वृत्तिमद्वृत्तय इत्यत्रापि तेनैव सम्बन्धेन वृत्तिमत्त्वं बोध्यं तेन व्यधिकरणधर्म्मावच्छिन्न-वह्न्यभाववति संयोगेन या वृत्तिस्तदभावस्य जात्यादौ वर्त्तमानस्य धूमादावसत्त्वेऽपि न क्षतिः, साध्याभावश्च पूर्व्ववद्बोध्यो व्याप्यवृत्तिश्च तद्वद्वृत्तित्वाभावोऽपि स्वव्या-

---

लक्षणसमन्वयः। व्यभिचारिणि तु निर्धूमवृत्तित्वत्वसमनियतप्रति-योगिताका ये येऽभावा धूमव्याप्येषु प्रसिद्धास्तदभावादेव नाति-व्याप्तिः, अत्र यावदित्यनुक्तौ अधिकरणे व्यधिकरणधर्म्मावच्छिन्न-प्रतियोगिताकसाध्याभाववद्वृत्तित्वाभावमादायातिव्याप्तिः, वृत्ति-मत्पदादाने सर्व्वत्र प्रायशो व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्-वृत्तित्वाभावस्यावृत्तिमात्रनिष्ठस्याभावादव्याप्तिः, असम्भवस्तु नास्ति तादात्म्येन सम्बन्धेन हेतुतायां व्यधिकरणधर्म्मावच्छिन्नसाध्या-भाववति गगनादेरपि तादात्म्येन वृत्तित्वाद्व्यधिकरणधर्म्माव-च्छिन्नस्यैवाभावस्य सम्भवाद्धेतौ च तस्य सत्त्वादिति, एवं विषयतादिसम्बन्धेन हेतुतायामपि बोध्यम्॥ ११॥

ननु वह्निमान् धूमादित्यत्र तत्तद्वह्नित्वावच्छिन्नवह्न्यभाव-वद्वृत्तित्वाभावस्य धूमेऽसत्त्वादव्याप्तिरित्यत आह, साध्याभाव-श्चेति पूर्व्ववदिति। साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदक-रूपावच्छिन्नप्रतियोगिताको व्याप्यवृत्तिश्चेत्यर्थः, तेन वह्निमान् धूमादित्यत्र वह्निघटोभयाभावमादाय नाव्याप्तिः, न वा कपि-संयोगाभाववान् द्रव्यत्वादित्यादौ कपिसंयोगाभावाभावकपि-

**पक्तत्तत्साध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकः तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तेन समानाधिकरणेन साध्याभाववद्वृत्तित्ववृत्तिना वा धर्म्मेण अनव-**

---

संयोगवद्वृत्तित्वस्य सत्वाद्द्रव्यत्वादौ इदं कपिसंयोगि एतत्वादित्यत्र तु समानाधिकरणधर्म्मावच्छिन्नकपिसंयोगाभावस्याव्याप्यवृत्तित्वेन व्याप्यवृत्तिव्यधिकरणधर्म्मावच्छिन्नसाध्याभावसजातीयस्य तादृशसाध्याभाववद्वृत्तित्वाभावस्य व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यैव सम्भवतो हेतौ सत्वेनाव्याप्त्यभावात्, स्वव्यापकेति स्वं प्रतियोगिता तद्व्यापकं यत्साध्याभाववद्वृत्तितात्वं तस्य व्यापिका या प्रतियोगिता सा यस्य तादृशवृत्तितात्वसमनियतेत्यर्थः, ननु वह्निमान् धूमादित्यादौ धूमनिष्ठवृत्तित्वविशेषमात्रवृत्तिरूपेण तादृशवृत्तित्वसामान्याभावस्य धूमातिरिक्तमात्रवृत्तित्वादव्याप्तिः अत आह, तत्तत्साध्याभावेति। तथाच तादृशवृत्तित्वविशेषमात्रवृत्ति यत् साध्याभाववद्वृत्तितात्वातिरिक्तं रूपं तदवच्छिन्नप्रतियोगिताकत्वात् इति न तस्य संग्रहः, समानाधिकरणेनेति। प्रतियोगितासमानाधिकरणेनेत्यर्थः अतो व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकवृत्तित्वाभावस्य परिग्रहः। ननु साध्याभाववद्वृत्तित्ववृत्तिप्रतियोगितासमानाधिकरणत्वमपेक्ष्य साध्याभाववद्वृत्तित्ववृत्तीत्येव लघुतरम् इत्यत आह, साध्याभाववद्वृत्तित्ववृत्तिना वेति। अत्र च इतोऽपि लाघवात् साध्याभाववद्वृत्तितात्वावच्छिन्नाभाव एव आदरणीयः, जगद्वृत्तितात्वावच्छिन्नघटा-

च्छिन्नप्रतियोगिताको बोध्यः, तेन आलोकाद्यवृत्तित्वेन रूपेण यो वह्निसामान्याभाववद्वृत्तित्वस्य यत्नेन्धनत्वाद्यवच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेरभावः । तस्य धूमादौ स्वनिष्ठसाध्याभाववद्वृत्तित्वविरहस्य च हेत्वन्तरवृत्तेः स्वस्मिन्न सत्त्वेऽपि न क्षतिरित्याहुः ॥ १२ ॥

---

भावमादाय निर्व्वह्निवृत्तितात्वावच्छिन्नाभावञ्चादाय वह्निमान् धूमादित्यादौ लक्षणसमन्वय इति नव्याः । स्वव्यापकत्वस्य प्रयोजनमाह, आलोकाद्यवृत्तित्वेनेति । अत्र च आलोकाद्यवृत्तिवृत्त्यभावप्रतियोगिताया घटादिसाधारण्यादव्यापकमेव । वह्निसामान्याभावेति । तादृशवृत्तितात्वव्यापकप्रतियोगितेत्यस्य व्यावृत्तिमाह, यत्नेति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वलाभार्थम् इन्धनत्वाद्यनुसरणम्, अत्र महानसवृत्तित्वनिष्ठाप्रतियोगिता तु जगद्वृत्तित्वस्य न व्यापिका इति भावः, ननु महानसवृत्तित्वाभावस्य पर्व्वतीयधूमादौ सत्त्वात् तादृशहेतुमात्रावृत्त्यभावाभावमाह, स्वनिष्ठेति । स्वनिष्ठं धूमादिनिष्ठं यत्साध्याभाववद्वृत्तित्वमित्यर्थः, हेत्वन्तरमालोकादिकं स्वस्मिन् धूमादौ असत्त्वेऽपीति सप्तम्यन्तेनान्वितम्, ननु तथापि जगद्वृत्तित्वेन रूपेण धूमनिष्ठजगद्वृत्तित्वविशिष्टघटान्यतराभावस्यापि साध्याभाववद्वृत्तितात्वातिरिक्त-समानाधिकरण-धर्म्मानवच्छिन्नप्रतियोगिताकत्वात्, तस्य च धूमादौ असत्त्वादव्याप्तिरिति चेन्न

अन्ये तु वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वं तादृशवृत्तित्वाभावश्च स्वव्यापकतादृशवृत्तितात्वव्यापकप्रतियोगिताको बोध्यः, प्रयोजनञ्चोक्तप्रायं साध्याभाववद्वृत्तितात्व-

---

प्रकृतप्रतियोगितानतिरिक्तवृत्तीभूतं यत्साध्याभाववद्वृत्तितात्वं तदतिरिक्तेन समानाधिकरणधर्मेणानवच्छिन्नप्रतियोगिताकत्वम् इत्यस्य विवक्षितत्वात्, भवति च घटसाधारण्याः प्रकृतप्रतियोगितायाः अतिरिक्तवृत्त्येव तादृशवृत्तितात्वम् इति। अत्र च मिश्रलक्षणोक्तसाध्याभाववद्वृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वविवक्षणे आलोकाद्यवृत्तित्वावच्छिन्नाभावस्य यावन्मध्यपतितस्य अवारणम् इति तन्नोक्तम्। तत्र च यावत् पदाभावात् न सम्यगिति अत्र परत्र च आकाशहेतुकेऽतिव्याप्तिः वृत्तिमत्त्वविवक्षया इष्टापत्त्या वा समाधेया ॥ १२ ॥

अन्येत्वित्यादि। अत्र च वृत्तिमत्पदप्रयोजनं केवलान्वयिन्येव बोध्यं, व्यतिरेकिणि तु तादृशकूटाधिकरणवृत्तित्वाभावस्य अवृत्तिमात्रवृत्तित्वाभावात्, एवं तत्र हेतुतावच्छेदकसम्बन्धेन वृत्तिमत्वृत्तित्वविवक्षणस्यापि प्रयोजनं बोध्यं कूटपदं सार्थकीकर्त्तुं तत्तदिति विहाय समनियतप्रतियोगिताकत्वमेव अनुवदति, तादृशेति।

उक्तप्रायमिति प्रतियोगिताव्यापकेत्यस्य व्यावृत्तिस्तु पूर्ववदेव बोध्या, तादृशवृत्तितात्वव्यापकप्रतियोगितेत्यस्यव्यावृत्तिस्तु न वह्निमान् धूमादित्यादौ महानसस्य कूटाधिकरणत्वाभावात्।

व्यापकप्रतियोगिताकस्य च व्यधिकरणधर्म्मावच्छिन्ना-
भावस्यैव वृत्तिमद्वृत्तित्वाद्व्यभिचारिण्यतिव्याप्तिरतः
समुदायेति। साध्याभावश्च साध्यतावच्छेदकसम्बन्धेन
बोध्यः, तेन समवायेन वह्निः साध्यत्वे धूमे संयोगेन च
तथात्वे वह्न्यवयवत्वे पर्व्वतवह्न्यवयवसंयोगे च पर्व्वतस्य
वह्न्यवयवस्य च सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानधि-

---

धूमनिष्ठवृत्तित्वस्य तादृशकूटाधिकरणवृत्तितात्वाभावात् किन्तु
इदं वाच्यं ज्ञेयत्वादित्यादौ अतएवाह, उक्तप्रायमिति। समुदाय-
स्येतीति निर्धूमवृत्तित्वाभावस्य प्रतियोगिता न साध्याभाववद्वृत्ति-
तात्वस्य व्यापिका साध्याभाववद्वृत्तितात्वस्य जगद्वृत्तित्वेऽपि
सत्वात् येन निर्धूमवृत्तित्वाभावमादाय कूटपदादानेऽपि याव-
त्पदेनैव व्यभिचारिवारणं भवेत्, तद्दाने तु निर्धूमवृत्तित्वाभाव-
प्रतियोगितायाः एव तथाविधकूटाधिकरणवृत्तितात्वव्यापकत्व-
लाभादिति ध्येयम्। तेनेत्यादि—धूम इति। पूर्व्वान्वयि तथात्वे
वह्नेः साध्यत्वे अत्र चोभयोरपि धूमवद्वह्न्यवयवत्वयोः विरुद्ध-
त्वादाह, पर्व्वतेति। संयोगस्य द्विष्ठत्वात् वह्नेः समवायेन संयो-
गेन वा साध्यतायां व्यभिचारित्वमिति भावः सम्बन्धद्वयं संयोगः
समवायश्च, तेन पर्व्वतस्य संयोगसम्बन्धावच्छिन्नाभावानधिकर-
णत्वं वह्न्यवयवस्य च समवायसम्बन्धावच्छिन्नाभावानधिकरणत्वं
च लभ्यते, तथाच तादृशाभावसमुदायवत्त्वं ह्रदादेरेव इत्यति-

करणत्वेऽपि नातिव्याप्तिः, तथा स्वव्यापकीभूतसाध्य-
तावच्छेदकव्यापकप्रतियोगिताकोऽपि बोध्यः। तेन यत्र
पृथिवीत्वाभावादौ साध्ये तत्तद्विपक्षावृत्तित्वाद्यवच्छिन्न-
प्रतियोगिताकाभावकूटाधिकरणमप्रसिद्धं, तत्र सद्धेतौ

---

व्याप्तिसम्भावनापीत्यपेरर्थः अत्र च साध्याभावमात्रविवक्षणे इदं
गुणकर्म्मान्यसत्तावज्जातिमत्त्वादित्यत्रातिव्याप्तिः गुणवृत्तित्व-
विशिष्टसत्ताभावादीनामपि कूटमध्यपतितत्वात्। अथ तावदधि-
करणे जात्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तित्वमप्रसिद्धमिति
चेत् तथापि जातिमत्त्वप्रकारकप्रमाविषयत्वादिहेतुकेऽतिव्याप्तिः
एवं वह्निमान् धूमादित्यादावव्याप्तिः, तत्र तत्तत् ह्रदावृत्तित्वाव-
च्छिन्नाभावानामपि कूटमध्यनिविष्टत्वात्तावदधिकरणाप्रसिद्धेः।
एवं साध्याभावस्य पूर्व्वोक्तविवक्षायामपि संयोगसम्बन्धावच्छिन्न-
प्रमेयसामान्याभावस्य कूटमध्यनिविष्टत्वात्तदधिकरणे रूपादौ
हेतुतावच्छेदकसम्बन्धेन वृत्तित्वाप्रसिद्धिरित्यभिप्रेत्य साध्याभाव-
पदमन्यथा व्याचष्टे, तथेत्यादि स्वं प्रतियोगिता तद्व्यापकीभूतं
यत्साध्यतावच्छेदकं तद्व्यापिका या प्रतियोगितेत्यर्थः, स्वव्यापकी-
भूतेत्यस्य व्यावृत्तिमाह, यत्रेत्यादि। वह्निमान् धूमादित्यत्र
ह्रदादिवृत्तित्वावच्छिन्नाभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगि-
ताकस्यान्यत्रापि उत्पत्तिकालावच्छेदेन सत्वात् अभावसाध्यक-
पर्य्यन्तानुधावनं, ननु यावतामैकाधिकरण्यं सम्भवतीत्यादिवक्ष्य-
माणविवक्षापत्ते इयं व्यावृत्तिर्न घटत इत्यत आह, पृथिवी-

पृथिवीत्वादौ साध्ये जातित्वाद्यवच्छिन्नाभाववति सामान्यादाववर्त्तमाने द्रव्यत्वप्रकारकप्रमाविषयत्वादौ च नाव्याप्तिरतिव्याप्तिर्व्वा, नाप्यभावत्वादिना अभावादौ साध्ये तत्तत्साध्याभावकूटाधिकरणाप्रसिद्ध्याऽव्याप्तिरित्याहुः तन्न पृथिवीत्वद्रव्यत्वोभयवान् द्रव्य-

---

त्वादाविति। इयं पृथिवीद्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादावित्यर्थः, न चात्रापि तत्तज्जलावृत्तित्वावच्छिन्नाभावस्य तत्तज्जलादिमात्रवृत्तित्वात् कूटाधिकरणाप्रसिद्धिः तस्य समवायसम्बन्धावच्छिन्नाभावस्य सामान्यादावपि सत्वात् समवायसम्बेन द्रव्यत्वे हेतूकृते हेतुतावच्छेदकसम्बन्धेन तादृशवृत्तित्वमप्रसिद्धमतः प्रमाविषयत्वपर्य्यन्तानुधावनं, सामान्यादावपि विशेषणताविशेषेण कस्यचित् प्रमाविषयत्वस्य वृत्तेः साध्यतावच्छेदकव्यापकीभूतप्रतियोगिताकेत्यस्य व्यावृत्तिमाह, नापीति। अयमभाववान् प्रमेयत्वादित्यादौ घटत्वपटत्वाद्यभावाभावरूपस्य घटत्वपटत्वादेरेकाधिकरणाप्रसिद्धिरतोऽव्याप्तिरित्यर्थः, यद्यपि यावतामेकाधिकरण्यं सम्भवति तावतां कूटे विवक्षित एवाप्रसिद्धिप्रतीकारस्तथापि वक्ष्यमाणरीत्या अव्याप्तिर्बोध्या। तदुभयान्यतरेति। यत्रैव द्रव्यत्वाभावस्तत्रैव तदुभयान्यतराभावस्तथा च कूटमध्ये तस्यापि प्रवेशात् तमादायाधिकरणं गुणाद्येव। ननु स्वव्यापकसाध्यतावच्छेदकेत्यत्र स्वपर्य्याप्त्यधिकरणताकत्वं विव-

त्वादित्यादौ तदुभयान्यतरत्वावच्छिन्नाभाववति द्रव्यत्वादेरवृत्तेरतिव्याप्तेः, अपिच इदं पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत्द्रव्यत्वादित्यादौ द्रव्यत्वत्वावच्छिन्नाभावकूटाधिकरणगुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्वादतिव्याप्तेः द्रव्यत्वत्वावच्छिन्नप्रतियोगितायाः पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वात् ॥ १३ ॥

किञ्च रूपाभावसाध्यके सद्धेतौ साध्याभावसमुदायनिविष्टसकलरूपव्यक्त्यधिकरणाप्रसिद्धिः । यावता-

---

क्षणीयं तथाचान्यतरत्वावच्छिन्नाभावप्रतियोगितायाः प्रत्येकपरिसमाप्तायाः अधिकरणे उभयत्वं न पर्य्याप्तमिति कूटमध्ये तदप्रवेश इत्यत आह, अपि चेति । अत्र च द्रव्यत्वनिष्ठाया अधिकरणे द्रव्यत्वे पृथिव्यन्यद्रव्यत्वत्वं पर्य्याप्तमिति ॥ १३ ॥

ननु प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यधिकरणे यावति यत्साध्यतावच्छेदकावच्छिन्नाधिकरणत्वं तदेव विवक्षणीयम्, तथाच तादृशप्रतियोगितावच्छेदकावच्छिन्नद्रव्यत्वाधिकरणे पृथिव्यां न पृथीव्यन्यद्रव्यत्वत्वावच्छिन्नाधिकरणत्वमित्यत आह, किञ्चेति रूपाभावेति । न च साध्यतावच्छेदकव्यापकीभूतप्रतियोगितेत्यस्य व्यावृत्तिरसंलग्नेति वाच्यम् अभाववान् अभिधेयादित्यत्र तथापि व्यधिकरणधर्म्मावच्छिन्नाभावसहिततादृशाभावरूपघटपटत्वाधिकरणे घटादौ वृत्तेरव्याप्तिः । ननु इदं पृथिवीवृत्तिगुणशून्यं वाच्यत्वा-

मभावानामैकाधिकरण्यं तावतां समुदाये विवक्षितेऽपि इदं पृथिवीवृत्तिगुणशून्यं सत्तान्यपृथिवीसमवेतशून्यं वा वायुत्वाद्रूपवदन्यत्वादित्यादौ चातिप्रसङ्गः।

तत्र तादृशसाध्याभावस्तोमस्य नियमतो रूपादिघटितत्वेन तद्वति हेतोरवृत्तेः। वस्तुतो लिखितानामेव रूपाणां तादृशाभावसहस्रसमानाधिकरणत्वात्

---

दिति सद्धेतुरेव उत्पत्तिकालावच्छेदेन महाप्रलयावच्छेदेन च वायुसामान्ये तादृशाभावसत्वादित्यत आह, सत्तान्येति। ननु पृथिवीसमवेताभावस्य समवेताभावसमनियततया समवेतमात्रस्यैव तत्प्रतियोगित्वेन समवेतस्य च वायावपि सत्वेनातिव्याप्तिर्न घटते इत्यत आह, सत्तेति, सत्तान्येति। वायुत्वस्य एतत्साध्यकविरुद्धतया आह, रूपवदन्यत्वेति। एतस्य हेतोः साध्यसामानाधिकरण्यं गुणादावेव रूपादीति अयं भावः। वायोः पृथिव्योः संयोगाधिकरणं द्वितयमेव यद्यपि, तथापि स्वसामानाधिकरण्यापन्नरूपघटितकूटस्याधिकरणं पृथिव्येवेति।

ननु यथा पृथिवीसमवेताभावसमवेताभावयोः समनैयत्यं तथा सत्तान्यपृथिवीसमवेताभावद्रव्यमात्रसमवेताभावयोरपीति वायुवृत्तिसमवेतकूटस्यापि साध्याभावात्मकतया तदादाय पृथिव्यादितद्वायुरपि कूटाधिकरणमिति स दोषस्तदवस्थ इत्यत आह, वस्तुत इति। तादृशाभावो व्यधिकरणधर्म्मावच्छिन्नाभावः, तथाच तादृशा-

समानाधिकरण—यावदभावाधिकरणाप्रसिद्धिर्दुर्वारै-वेति। किञ्च हेतुतावच्छेदकसम्बन्धेन या साध्या-भाववति वृत्तिस्तदभावो वक्तव्यः अन्यथा धूमादाव-व्याप्तिः। साध्यतावच्छेदकसम्बन्धेन साध्याभाववति कालादौ वृत्तिवन्मात्रस्यैव वृत्तेर्व्यभिचारिण्यतिप्रसङ्गो वा। तथाच सत्त्वादि-साध्यके संयोगेन समवायेन हेतावव्याप्तिः। साध्याभाववति तेन सम्बन्धेन वृत्तेर-प्रसिद्धेरिति।

---

भावसामानाधिकरण्यापन्नानि यावन्त्येव रूपाणि तावतामधि-करणं सुतरामप्रसिद्धं रूपाभाववान् वायुत्वात्, इत्यत्रैवाव्याप्ति-रिति भावः। ननु सामानाधिकरण्यापन्नानां यावतामैकाधि-करण्यमिति न वाच्यं, किन्तु यस्मिन्नेवाधिकरणे यावन्तः सम्भवन्ति तादृशमेवाधिकरणं ग्राह्यम् इत्यत आह, किञ्चेति। केचित्तु स्वसाध्याभावत्वावच्छिन्नानां यावताम् ऐकाधिकरण्यम् अस्ति च साध्याभावत्वावच्छिन्नस्य रूपस्य कूटमध्ये प्रवेश इति रूप-सम्बलितकूटाधिकरणं घटादिरेव तत्राह, किञ्चेति अन्यथेति। वह्निमान् धूमादित्यत्र साध्याभावकूटाधिकरणे धूमावयवे धूमस्य वृत्तित्वादित्यर्थः। इदं पुनरिहावधेयं, यदि सम्बन्धत्वमेकं नास्ति तदा साध्याभाववद्वृत्तित्वाभावाः संयुक्तत्वाभावाः सम-वेतत्वाभावा इत्यमेव यावन्तोऽभावाः धूमे न सन्तीत्यव्याप्ति-

साधनसमानाधिकरणत्वेन साध्याभावो विशेष-

---

णीयाः, यदि च सम्बन्धत्वं पुनरेकं तदा तादृशवृत्तित्वाभावो व्यधिकरणधर्म्मावच्छिन्नाभाव एव वक्तव्यः, तथाच व्यभिचारिण्यतिप्रसङ्ग इति, तथाचेति । हेतुतावच्छेदकसम्बन्धेन वृत्तित्वविवक्षणे च इत्यर्थः ।

साधनसमानाधिकरणत्वेनेत्यादि । अत्र च विवक्षायां साध्यतावच्छेदकसमव्याप्तेत्यादिव्यावृत्तिप्रयास एवालग्नस्तथा हि पृथिवीत्वाभाववान् जलत्वादित्यत्र घटावृत्तित्वादिना योऽभावः स साधनासमानाधिकरण एव । एवं पृथिवीत्ववान् द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादावपि जातित्वावच्छिन्नाभावस्तथा, तथाच साध्यतावच्छेदकव्यापकीभूतप्रतियोगिताकेत्येव वक्तव्यं साध्यतावच्छेदकव्यापकीभूतप्रतियोगिताकत्वाविवक्षणे उपदर्शिताभावादिसाध्यके प्रमेयादिसाध्यके च सद्धेतौ तत्तदभावत्वादिना अभावानां तत्तत्प्रमेयाभावानाञ्च साधनसमानाधिकरणानां समुदायापन्नानामधिकरणाप्रसिद्धेः, गुणकर्म्मान्यत्वविशिष्टसत्त्वावान् जातिमत्त्वात् इत्यत्र तु सत्ताभावः साधनासमानाधिकरण एव इति न तस्य कूटमध्यप्रवेशः ।

न च तथापि साधनसमानाधिकरण-गुणवृत्तित्वविशिष्टकर्म्मवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाभावानामपि तथात्वात् जातिमत्त्वप्रकारकप्रमाविषयत्वादित्यादिहेतौ विशिष्टसत्तादिसाध्यकेऽतिव्याप्तिः, साध्यतावच्छेदकस्य प्रतियोगिताव्यापकत्वविवक्षणे-

णीय इति चेद्विशिष्यन्तां तथापि भूतत्वमूर्त्तत्वाद्यो-रण्यतरत्वेनान्यरताभावे साध्ये स्पर्शवदन्यत्वादावतिव्याप्तिस्तादृशसाध्याभावसमुदायवति पृथिव्यादौ तस्यावृत्तेः ॥ १४ ॥

किञ्च महाकालान्यत्वादिसाध्यके व्यभिचारिणि कालिकविशेषणताविशेषेणहेतावतिव्याप्तिः । तादृश-

---

ऽपि तद्दोषतादवस्थ्यात् एतत्सर्व्वं परिचिन्त्यैवेतेनेत्यादि वक्ष्यति । एवं पृथिवीत्वद्रव्यत्वोभयवानित्यत्रापि साधनसामानाधिकरण्य-विशेषणेनैव वारणं बोध्यम् ।

तथापीति । भूतत्वमूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वा-दित्यादावित्यर्थः । तत्रापि भूतत्वमूर्त्तत्व एव अन्यतराभावाभावास्ते तु प्रत्येकं गगनादौ साधनसमानाधिकरणा एव तादृशकूटाधि-करणं वायुपर्य्यन्तमेव तद्वृत्तित्वाभावः स्पर्शवदन्यत्वे स्फुट एवेति ॥ १४ ॥

ननु कूटतापन्नस्य साधनसमानाधिकरण्यं विवक्षितं, तथाच भूतत्वमूर्त्तत्वं कूटावच्छिन्नं सत् न साधनसामानाधिकरणमिति । नातिव्याप्तिरित्यत आह, किञ्चेति । अयं महाकालान्यो घटादि-त्यत्र साध्याभावकूटाधिकरणं महाकाल एव कालिकसम्बन्धेन महाकालवृत्तित्वाभावः कालिकसम्बन्धेन वृत्तिमति वर्त्तते यः स व्यधिकरणधर्म्मावच्छिन्नाभाव एव इत्यतिव्याप्तिरित्यर्थः, एव-

साध्याभावसमुदायवति महाकाले तेनैव सम्बन्धेनवृत्ति-
मन्मात्रस्यैव वृत्तेः। एतेन साध्यतावच्छेदकावच्छिन्न-

---

मेतद्रूपाभिन्नं गुणत्वात् ज्ञानादित्यादौ तादृशसाध्याभावसमुदाया-
धिकरणे एतद्रूपभिन्ने समवेतत्वाभावः एतद्रूपभिन्ने विषयित्वाभावो
वा तादृशसम्बन्धेन वृत्तिमन्मात्रवृत्तिर्यः स व्यधिकरणधर्म्मावच्छिन्नाभाव एवेत्यतिव्याप्तिः। एवं एतत् पटाभिन्नं घटादित्यत्र
संयोगेन हेतुतायामपि बोध्यम्।

अत्र केचित् सार्व्वभौममते सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमितिन्यायेन वृत्तित्वाभावः प्रायशोऽव्याप्यवृत्तिरेव,
तथाच प्रकृतेऽपि कालिकसम्बन्धेन हेतौ घटे कालोपाध्यवच्छेदेन
महाकालवृत्तित्वाभावे समानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताके विद्यमानेऽपि हेत्वधिकरणावच्छेदेन तस्यावृत्तित्वान्नातिव्याप्तिः, लक्षणे तथैव विवक्षणादित्याहुः।

परे तु साध्याभावकूटाधिकरणवृत्तित्वाभावा इत्यत्र तु
वृत्तित्वं दैशिकविशेषणताविशेषेणैव, तथाच तादृशवृत्तित्वाभावा-
यावन्तो येषु दैशिकविशेषणताविशेषकालिकेषु तानि यद्रूपावच्छिन्नस्य व्यापकानि तत्त्वमित्यर्थः। तथाहि महाकालान्यो
घटादिस्तत्र महाकालान्यत्वप्रकारकप्रमाविषयत्वं तथा, न च
कालिकसम्बन्धेन घटव्यापकं इत्यपि वदन्ति।

ननु साध्यतावच्छेदकसमव्याप्तप्रतियोगिताकत्वं साध्यतावच्छेदकव्यापकप्रतियोगिताकत्वं वा विवक्षताम् उभयथापि इदं

व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्ति-स्वसमानाधिकरण--यावदभावाधिकरण--वृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तयस्तद्वत्त्वं व्याप्तिः केवलान्वयिनः संयोगाद्यभावस्याभावाः संयोगादयो न व्याप्यवृत्तयः ।

एवं साध्यस्य गुणसामान्यस्याभावो द्रव्यत्वाधिकरणे उत्पत्तिकालावच्छेदेन वर्त्तमानोऽपि न व्याप्य-

---

पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वात् इत्यत्रातिव्याप्तिः। तत्र तद्द्रव्यवृत्तित्वविशिष्टद्रव्यत्वाभावानां साधनसमानाधिकरणानां प्रतियोगिताव्यापकसाध्यतावच्छेदकव्यापकत्वस्य समव्याप्तत्वस्यापि सत्त्वात्तादृशकूटाधिकरणद्रव्यवृत्तित्वाभावस्य च द्रव्यत्वे सत्त्वादतिव्याप्तिरित्यत आह, तेनेति। तथाच साधनसमानाधिकरणेत्यादिविवक्षणे साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकेत्येव विवक्षणीयम्, एतेनेत्यस्य तु पूर्व्वोक्तातिव्याप्तिद्वयेनेत्यर्थः ।

केवलान्वयिन इत्यादि इदं कपिसंयोगाभाववत् मेयत्वादित्यादौ साधनसमानाधिकरणसंयोगात्मकाभावमादाय कूटाधिकरणं द्रव्यमेव तद्वृत्तित्वाभावो मेयत्वे वाधित इत्यव्याप्तेर्व्याप्यवृत्तिपदेन वारणमिति दैशिकाव्याप्यवृत्तिवारणमुक्त्वा कालिकाव्याप्यवृत्तिवारणमाह, एवमिति। गुणवान् द्रव्यत्वात् इत्यादावित्यर्थः,

वृत्तिः उक्तरूपानवच्छिन्नप्रतियोगिताकाः क्वचिदप्रसिद्ध्यादिसम्पादकाः पुनरभावा न हेतुसमानाधिकरणाः । उक्तसमुदायाधिकरणवृत्तित्व-तदभाववृत्तिमत्त्वानि पूर्व्वोक्तरीत्या प्रत्येतव्यानि इत्यादिकमपास्तम् ॥ १५ ॥

---

अत्र च साधनसमानाधिकरणगुणसामान्याभावमादाय कूटाधिकरणे नित्यद्रव्यभिन्नमेव तद्वृत्तित्वाभावस्य द्रव्यत्वे वाधित इत्यव्याप्तिः सम्भवितुमर्हति इत्यर्थः, उक्तरूपेति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नेत्यर्थः, क्वचिदिति । पृथिवीत्वाभाववान् जलत्वादित्यादावित्यर्थः, अप्रसिद्धीति । पृथिवीत्वाभाववान् जलत्वादित्यत्र घटावृत्तित्वादिना ये तादृशाभावास्तेषां कूटाधिकरणाप्रसिद्धिरित्यर्थः, आदिपदादिदं जलं द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादावतिव्याप्तिपरिग्रहः, पूर्व्वोक्तेति । हेतुतावच्छेदकसम्बन्धेन वृत्तित्वं तदभावस्य वृत्तितात्वसमनियतप्रतियोगिताकः, वृत्तिमत्त्वमपि हेतुतावच्छेदकसम्बन्धेन प्रतियोगिताव्यापकतादृशवृत्तितात्वेत्यादिव्यावृत्तिस्तु, उपदर्शितालोकावृत्तित्वेन रूपेणाभावमादाय न घटते वह्निसामान्याभावस्य साधनासमानाधिकरणत्वात्, जगद्वृत्तित्वस्य चालोकावृत्तित्वादिति । किन्तु जगद्वृत्तित्वधूमत्वोभयाभावमादाय वोध्या, तदभावस्य तादृशवृत्तितात्वव्यापकप्रतियोगिताकत्वात्, अन्यच्च पूर्व्ववद्बोध्यम् ॥ १५ ॥

तत्त्वचिन्तामणिः ।

प्रतियोग्यवृत्तिश्च धर्म्मो न प्रतियोगितावच्छेदकः तद्विशिष्टज्ञानस्याभावधीहेतुत्वात् ।

अन्यथा निर्व्विकल्पकादपि घटो नास्तीति प्रतीत्यापत्तेः । गविशशशृङ्गं नास्ति इति प्रतीतेरसिद्धेः शशशृङ्गं नास्तीति च शशे शृङ्गाभाव इत्यर्थः ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ व्यधिकरणधर्म्मावच्छिन्नाभावः समाप्तः ।

---

दीधितिः ।

तद्विशिष्टेति । विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वात् अभावप्रतीतिर्हि घटत्वादिविशिष्टस्य घटादेः प्रतियोगित्वमवगाहमानो विशेषणस्यापि घटत्वादेस्तदवच्छेदकत्वमवगाहते ।

---

प्रतियोगितावच्छेदकविशिष्टज्ञानं हि नाभावधीमात्रहेतुरिति व्याचष्टे, विशेषणतेति । अतएव वक्ष्यति अभावप्रत्ययो हि विशिष्टवैशिष्टमर्य्यादां नातिशेत इति विशेषणस्यापि इति इदं पुनः प्रत्यक्षप्रतीतिमभिप्रेत्य, शब्दादौ तु तदवच्छेदकत्वं पुनरन्यथोपपादितमेव न स्वातन्त्र्येणेति, अतएव वक्ष्यमाणविकल्पाः सङ्गच्छन्त इति भावः ।

| Title | Rs. | As. |
|---|---|---|
| *Markandeya Purana, Fasc 5-7 @ /10/ each | 1 | 14 |
| *Mimāmsā Darçana, Fasc 10-19 @ /10/ each | 6 | 4 |
| Nyāyavārtika, Fasc. 1--6 @ /10/ each | 3 | 12 |
| *Nirukta, Vol IV fasc. 1-8 @ /10/ each | 5 | 0 |
| *Nitisara, Fasc 3-5 @ /10/ each | 1 | 14 |
| Nityācārapaddhatih, Fasc -7 @ /10/ each | 4 | 6 |
| Nityācārapradīpah Vol I. Fasc 1--8, Vol. II, Fasc. 1-3 @ /10/ each | 6 | 14 |
| Nyayabindutikā, Fasc 1 @ /10/ each | 0 | 10 |
| *Nyāya Kusumāñjali Prakarana Vol. I, Fasc 2--6, Vol. II, Fasc. 1--3 @ /10/ each | 5 | 0 |
| Nyayasarah | 2 | 0 |
| Padumawati, Fasc 1--5 @ 2/ | 10 | 0 |
| *Pariçista Parvan, Fasc 3--5 @ /10/ each | 1 | 14 |
| Prākrita-Paingalam, Fasc 1--7 @ /10/ each | 4 | 6 |
| Prithiviraj Rāsa. Part II, Fasc 1--5 @ /10/ each | 3 | 2 |
| Ditto (English) Part II, Fasc 1 @ 1/- | 1 | 0 |
| Prākrta Lakṣaṇam Fasc 1 @ 1/8/ each | 1 | 8 |
| Parāçara Smṛti, Vol I, Fasc 1--8, Vol. II, Fasc 1--6, Vol III, Fasc 1--6 @ /10/ each | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| Pariksamukha Sutram | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each | 3 | 12 |
| Rasarnavam, Fasc 1-3 | 3 | 12 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each | 1 | 4 |
| Samaraieca Kaha Fasc. 1-3, @ /10/ | 1 | 14 |
| Sāṇkhya Sūtra Vṛtti, Fasc 1-4 @ /10/ each | 2 | 8 |
| Ditto (English) Fasc 1-3 @ 1/- each | 3 | 0 |
| *Sankara Vijaya, Fasc 2-3 @ /10/ each | 1 | 4 |
| Six Buddhist Nyaya Tracts | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc 1-6 @ /10/ each | 3 | 12 |
| Sragdharā Stotra ( Sanskrit and Tibetan ) | 2 | 0 |
| Suçruta Samhitā, (Eng ) Fasc 1 @ 1/- each | 1 | 0 |
| Suddhikaumudī, Fasc 1-4 @ /10/ each | 2 | 8 |
| Sundaranandam Kavyam | 1 | 0 |
| Suryya Siddhanta fasc 1 | 1 | 4 |
| Syainika Sastra | 1 | 0 |
| *Taittreya Brahmana, Fasc 11-25 @ /10/ each | 9 | 6 |
| ,, Pratisakhya, Fasc 1-3 @ /10/ each | 1 | 4 |
| *Taitteriya Samhitā, Fasc 27-45 @ /10/ each | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc 10-19 @ /10/ each | 6 | 14 |
| Tantra Vārteka (English) Fasc 1-8 @ 1/4/ each | 10 | 0 |
| Tattva Cintāmaṇi, Vol I, Fasc 1-9, Vol II, Fasc 1-10, Vol III, Fasc 1-2, Vol IV, Fasc 1, Vol V, Fasc 1--5, Part IV, Vol II, Fasc. 1-12 @ /10/ each | 24 | 6 |
| Tattva Cintamani Didhiti Vivriti, Fasc, 1, @ /10/ each | 0 | 10 |
| Ditto Prakas, fasc 1-2, @ /10/ each | 1 | 4 |
| Tattvārthadhigama Sutram, Fasc 1-3 @ /10/ each | 1 | 14 |
| Tirthacintamoni, fasc, 1, @ /10/ each | 0 | 10 |
| Trikāṇḍa-Maṇḍanam, Fasc 1-3 @ /10/ each | 1 | 14 |
| Tul'si Satsai, Fasc. 1--5 @ /10/ each | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5 13 @ /10/ each | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each | 3 | 12 |
| *Vāyu Purāṇa, Vol I, Fasc. 3--6, Vol II, Fasc 1--7, @ /10/ each | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1-8 Vol- II Fasc. I @ /10/ each | 5 | 10 |
| Ditto Vol. II, Fasc. 2-4 @ 1/4/ | 3 | 12 |
| Vivādaratnākara, Fasc 1--7 @ /10/ each | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc 3-5 @ /10/ each | 1 | 14 |
| Yogasāstra of Hemchandra Vol. I. Fasc 1-3 | 3 | 12 |
| *Tibetan Series.* | | |
| Baudhyastotrasangraha, Vol. I ( Tib. & Sans. ) | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 | 1 | 0 |
| Pag-Sam S'hi Ṭiñ, Fasc. 1--4 @ 1/- each | 4 | 0 |
| Rtogs brjod dpag hkhri S'iñ ( Tib. & Sans. Avadāña Kalpalatā ) Vol. I, Fasc. 1--8 ; Vol II Fasc. 1--7 @ 1/- each | 15 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5 ; Vol II, Fasc 1-3 ; Vol III, Fasc. 1-6, @ 1/ each | 14 | 0 |
| *Arabic and Persian Series.* | | |
| 'Ālamgirnāmah, with Index, (Text) Fasc. 1--13 @ /10/ each | 8 | 2 |

Āīn-i-Akbarī, Fasc 1-22 @ 1/8/ each ... ... ... ... 33 0
Ditto (English) Vol. I, Fasc. 1--7, Vol. II, Fasc. 1--5, Vol III, ... 36 0
Ditto (English) Vol. I, Fasc. 1--8 , Vol II, Fasc. 1-7 Vol 3 @ 1/4/ each 20 0
Arabic Bibliography, by Dr. A. Sprenger, @ /10/ . ... ... 0 10
*Bādshāhnāmah, with Index, Fasc. 1--19 @ /10/ each ... ... 11 14
Conquest of Syria, Fasc 1-9 @ /10/ each . . ... Rs. 5 10
Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each ... .. 2 0
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc 1--3 @ 1/ each . .. 3 0
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each 31 8
Farhang-i-Rashīdī, Fasc 1-14 @ 1/8/ each . ... .. 21 0
Fihrist-i-Ṭūsī or, Ṭūsy's list of Shy'ah Books, Fasc. 1--4 @ 1/- each ... 4 0
Futūḥ-ush-Shām of Wāqidī, Fasc 1--9 @ /10/ each ... ... 5 10
Ditto of Āzādī, Fasc 1--4 @ /10/ each ... ... ... 2 8
History of Gujarat . . ... ... ... 1 0
Haft Asmān, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... 0 12
Hisātory of the Caliphs, (English) Fasc. 1--6 @ 1/4/ each ... ... 7 8
Iqālnamah-i-Jahāngīrī, Fasc 1--3 @ /10/ each ... ... ... 1 14
Iṣābah, with Supplement, 51 Fasc @ 1/- each . ... ... 51 0
Ma'ṣāir-i- Ālamgīrī, Fasc 1--6 @ /10/ each ... ... 3 12
Maa'āsir-ul-Umarā, Vol. I, Fasc 1--9, Vol. II, Fasc 1--9 ; Vol III, 1-10 ; Index to Vol. I, Fasc 10-11 ; Index to Vol. II, Fasc 10-12 ; Index to Vol. III, Fasc 11-12 @ /1/ each ... ... 35 0
Maghāzi of Wāqidī, Fasc. 1--5 @ /10/ each ... ... ... 3 2
Marhamu 'L Ilah 'L-Mu'Dila ... ... ... ... 1 0
Muntakhabu-t-Tawārīkh, Fasc 1--15 @ /10/ each .. ... ... 9 6
Ditto ( English ) Vol. I, Fasc 1--7 ; Vol. II, Fasc. 1--5 and 3 Indexes ; Vol III, Fasc 1 @ 1/ each ... .. ... 16 0
Muntakhabu-l-Lubāb, Fasc 1- 19 @ /10/ each ... ... ... 11 14
Ditto Part 3, Fasc 1 ... .. ... ... 1 0
Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... 0 10
Niẓāmi's Khiradnāmah-i-Iskandari, Fasc 1--2 @ /12/ each ... ... 1 8
Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut Col D. C. Phillott ... ... 5 0
Riyāzu-s-Salātīn, Fasc 1--5 @ /10/ each . ... ... ... 3 2
Ditto (English) Fasc. 1--5 @ 1/ ... ... ... 5 0
Tadhkira-i-khushnavīsān . . ... .. .. 1 0
Tabaqāt i-Nāṣirī, ( English ), Fasc 1-14 @ 1/- each ... .. 14 0
Ditto Index .. .. . 1 0
Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni Fasc 1--7 @ /10/ each 4 6
Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, Fasc 1- 6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc 1--2 @ 1/8/ each . .. ... 3 0
Tuzuk-i-Jahāngīrī, (Eng ) Fasc 1 @ 1/ .. .. ... ... 1 0
Wis-o-Rāmīn, Fasc. 1--5 @ /10/ each . ... ... ... 3 2
Zafarnāmah, Vol. I, Fasc. 1--9, Vol II, Fasc 1--8 @ /10/ each ... ... 10 10

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vols. XIX and XX @ 10/ each . ... 20
2. PROCEEDINGS of the Asiatic Society from 1870 to 1904 @ /8/ per No
3. JOURNAL of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No to Non-Members

*N B —The figures enclosed in brakets give the number of Nos in each Volume.*

4. Journal and Proceedings, N. S , 1905, to date, (Nos. 1-4 of 1905 are out of stock ), @ 1-8 per No. to Members and Rs. 2 per No to Non-Members
5. Memoirs, 1905, to date Price varies from number to number. Discount of 25% to Members
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910, ... 8 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I--III, with 8 coloured Plates, 4to @ 6/ each ... ... 18 0
9. Kaçmīraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi, and edited with notes by Major D. C. Phillott. ... 10 0

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... 34 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c. must be made payable to the "Treasurer, Asiatic Society" only

BIBLIOTHECA INDICA

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, NO 1311.

# अनुमान-दीधिति-प्रसारिणी




# ANUMANA DĪDHITI PRASĀRINI

BY

KRISHNA DAS SARVABHAUMA

WITH TATTVACINTAMANI AND DIDHITI

EDITED BY

PANDIT PRASANNA KUMAR TARKANIDHI

*Professor, Sanskrit College.*

FASCICULAS II.


Calcutta:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS.

No. 5, Nandakumar Chawdhury's 2nd Lane.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1, PARK STREET

1911.

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS. MR. BERNARD QUARITCH, 11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

*Sanskrit Series*

| Title | Rs. | As. |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2, 4 @ /10/ each ... ... | 1 | 4 |
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| *Agni Purāṇa, Fasc. 6-14 @ /10/ each ... ... ... ... | 5 | 10 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... ... ... | 14 | 6 |
| Aitereya Lochana. ... ... ... ... ... | 2 | 0 |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Aṣtasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| *Atharvana Upanishad, Fasc. 4-5 @ /10/ each ... ... ... | 1 | 4 |
| Atmatattaviveka, Fasc. I. @ /10/ each ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-7; Vol. II. Fasc. 1-7 @ 1/ each ... ... ... ... | 15 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1-2, Vol 2, Fasc. 1 @ /10/ each ... ... | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc. 1-3 Vol. II, Fasc 1-3 @ /10/ each ... | 3 | 12 |
| *Bhāmatī, Fasc. 4-8 @ /10/ each ... ... ... | 3 | 2 |
| Bhāṭṭa Dipikā Vol. I, Fasc. 1-6; Vol. 2, Fasc. 1, @ /10 each ... | 4 | 6 |
| Baudhyostatrasangraha ... ... ... ... ... | 2 | 0 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each ... ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... ... ... | 1 | 14 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. 1-5, Vol. III, Fasc. 1-7 Vol. 5, Fasc. 1-4 @ /10/ each ... ... | 14 | 6 |
| Ditto Vol. 6, Fasc. 1-3 @ 1/4/ each ... ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... ... ... | 3 | 2 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc. 1-14 @ /10/ each ... ... | 8 | 12 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III. Part I, Fasc. 1-18. Part II, Fasc. 1-10. Vol. IV. Fasc. 1-6 @ /10/ each ... | 36 | 14 |
| Ditto Vol. 4, Fasc. 7-8, @ 1/4/ each ... ... ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 8-9 @ /10/ ... ... ... | 1 | 4 |
| Çlockavartika, (English) Fasc. 1-7 @ 1/4/ each ... ... ... | 8 | 12 |
| *Çrauta Sūtra of Āpastamba, Fasc. 12-17 @ /10/ each ... ... | 3 | 12 |
| Ditto Çāṅkhāyana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4, Vol. III, Fasc. 1-4; Vol 4, Fasc. 1 @ /10/ each ... ... | 10 | 0 |
| Çri Bhāshyam, Fasc 1-3 @ /10/ each ... ... ... ... | 1 | 14 |
| Dāna Kriyā kaumudī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc. 1-7 @ /10/ each ... ... | 4 | 6 |
| Ditto Āchārasārah Vol. II, Fasc. 1-4 @ /10/ each ... ... | 3 | 2 |
| Gobhiliya Grihya Sutra, Vol. I. @ /10/ each ... ... ... | 3 | 2 |
| Ditto Vol. II. Fasc. 1-2 @ 1/4/ each ... ... ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... ... ... | 0 | 10 |
| Haralata ... ... ... ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. I ... ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each ... ... | 17 | 8 |
| *Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... ... ... ... | 4 | 6 |
| Lalita-Vistara, (English) Fasc. 1-3 @ 1/- each ... ... ... | 3 | 0 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāṣya-pradīpōdyōta, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12 Vol. III, Fasc. 1-10 @ /10/ each ... ... ... ... | 19 | 6 |
| Ditto Vol. IV, fasc. 1 @ 1/4 ... ... ... ... | 1 | 4 |
| Manutikā Sangraha, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |

न तु स्वातन्त्र्येण घटो नास्तीत्येव प्रतीतेस्तदिहा-भावप्रत्ययतो यदि व्यधिकरणधर्म्मेण विशिष्टं प्रतियोगिनं नावगाहते नावगाहत एव तदा तस्यापि प्रतियोगिता-वच्छेदकत्वं अथावगाहते तर्हि भ्रम एव, न च ततो-ऽर्थसिद्धिरिति भावः। यदि पुनरानुभविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्याद्यनुभवस्तदा तादृशाभावनिवारणं गीर्व्वाणगुरूणामप्यशक्यमिति मन्तव्यम्॥ १६॥

इति श्रीरघुनाथशिरोमणिविरचितायां व्याप्तिवादचिन्तामणि-दीधितौ व्यधिकरणधर्म्मावच्छिन्नाभावः समाप्तः।

---

नावगाहत एवेति। तथाच क्व व्यधिकरणधर्म्मस्यावच्छेदकत्व-मितिभावः। न च तत इति। यद्यपि तदंशे भ्रमत्वेऽपि अवच्छेदक-त्वमक्षुसमेव तथापि वैशिष्ट्यनियतमवच्छेदकत्वमित्यभिप्रायः, यदीति। प्रतियोगितावच्छेदकस्य स्वातन्त्र्येणभानमित्यर्थः। क्वचित् पुस्तके घटत्वेन घटो नास्तीति पाठः, स तु समानाधि-करणधर्म्मावच्छिन्नाभावस्थल एव प्रतियोगितावच्छेकस्य स्वातन्त्र्य-नावच्छेदकत्वावगाहनपरतया सङ्गमनीयः, पटो नास्तीति पाठस्तु प्रकृतपरतया अतिसुगम एव॥ १६॥

इत्यनुमानदीधितिप्रसारिण्यां व्याप्तिवादे व्यधिकरण-धर्म्मावच्छिन्नाभावः समाप्तः।

## अथ पूर्व्वपक्षः ।

### तत्त्वचिन्तामणिः ।

अथ साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वं व्याप्तिः केवलान्वयिनि साध्यासामा-

---

### दीधितिः ।

साध्येति । साध्यस्यासामानाधिकरण्यं येषु तेषामनधिकरणत्वं तदभाववत्त्वमिति यावत्, तस्मिन् सति साधिकरणत्वं तदवच्छिन्नाधिकरणताकत्वं सति सप्तम्या अवच्छेदकत्वलाभात्, तच्चेहानन्यवृत्तित्वम् एवञ्च साध्यवदवृत्तिसकलपदार्थाभाववत्त्वं यदधिकरण-

---

### प्रसारिणी ।

साध्येतीत्यादि । साध्यसामानाधिरण्यं यदि साध्यानधिकरणवृत्तित्वे तदा तदनधिकरणस्य गगनादेर्व्वारणाय साधिकरणपदे दत्तेऽपि केवलान्वयिन्यप्रसिद्धिर्ग्रन्थविरोधश्च यदि तदधिकरणानधिकरणत्वं तदा सत्यन्तेनैव गगनवारणे साधिकरणपदं व्यर्थं, द्रव्यं सत्त्वादित्यादावतिव्याप्तिश्च, सत्त्वादौ द्रव्यत्वाधिकरणानधिकरणत्वाभावादिति यथाश्रुतेऽनुपपत्त्या व्याचष्टे साध्यस्येत्यादि । अनधिकरणत्वमित्यस्य अधिकरणत्वाभावात्मकतया तत्र चाधिकरणत्वस्य वैयर्थ्यादाह, तदभाववत्त्वमिति । अत्रापि मतुवर्थोऽविव-

नाधिकरण्यं निरधिकरणे आकाशादौ प्रसिद्धमिति चेत् न, साध्यासामानाधिकरण्यं हि न साध्यान-

---

ताया अनूनवृत्तित्वमिति तु फलितार्थः। यथासन्निवेशेऽधिकरणत्वस्य न वैयर्थ्यं हेतुतावच्छेदकसम्बन्धलाभाय वा तत्। येन येन सम्बन्धेन यो यः साध्यवदवृत्तिस्तेन तेन सम्बन्धेन तदभावो बोध्यः। एतेन साध्यवद्वृत्तित्वं यदि साध्यतावच्छेदकसम्बन्धेन विवक्षितं तदा समवायेन साध्यतायां साध्यवदसमवेतस्य सार्व्वत्रिकत्वात् सकलतच्छून्याप्रसिद्धिः।

---

क्षित एव, ननु सतिसप्तम्याः अवच्छेदकत्वे लब्धेऽवच्छेदकत्वस्यानतिरिक्तवृत्तित्वार्थकतया साध्यवदवृत्तिसकलपदार्थाभाववत्त्वं यदधिकरणताया अनतिरिक्तवृत्तीत्यर्थो वाच्यः। स च धूमवान् वह्नेरित्यादौ धूमवदवृत्तिसकलपदार्थाभाववत्वस्य वह्न्यधिकरणताव्याप्यत्वेनातिव्याप्त इत्यत आह, तच्चेति। इदमेव सङ्गमयति एवञ्च इत्यादिना, ननु तादृशाभाववत्वं यस्य व्यापकमित्येवास्तु अलमधिकरणपदेनेत्यत आह, यथेति। ननु तथा अवैयर्थ्येऽपि अनतिप्रयोजनमित्यत आह, हेतुतेति। तदधिकरणपदं तथाच वह्निमान् धूमादित्यादौ समवायसम्बन्धेन धूमसम्बन्धिनि तदवयवे यावत् साध्यवदवृत्तिपदार्थसत्त्वेऽपि न क्षतिः, एतेन येन

धिकरणाधिकरणत्वं साध्याधिकरणानधिकरणत्वं वा केवलान्वयिनि यत्किञ्चित्साध्याधिकरणानधिकरणे धूमे चाव्याप्तिः ॥ १ ॥

---

अथ तदभावोऽपि तादृशेनैव सम्बन्धेन वाच्यः तदा जातिमान् मेयत्वादित्यादावतिव्याप्तिर्जातिमदसमवेतानां समवायेनाभावस्य केवलान्वयित्वात्। अतएव न समवायेन संयोगेन वा इदं न जातिमज्जातित्वादित्यादौ साध्यवत्समवेताद्यप्रसिद्धेश्च। नापि साधनतावच्छेदकसम्बन्धेन इदमेतद्रूपभिन्नं गुणत्वादित्यादावतिव्याप्तेः। नापि विषयतया घटभिन्नं मेयत्वादि-

---

येनेत्यादिविवक्षणेन साध्यवदसमवेतेति सर्व्वत्र वाच्यत्वादीनां सत्वादित्यर्थः, तादृशेन साध्यवद्वृत्तित्वप्रयोजकसम्बन्धेन, जातिमदिति। यत्यत् समवेतं तज्जातिमत्येव समवैति इत्यसमवेतमेव जातिमदसमवेतं, तथाच समवायेन तदभावः केवलान्वयीति भावः अतएव प्रकृतातिव्याप्तेरेव न समवायेनेति पूर्व्वं साध्यतावच्छेदकसम्बन्धत्वप्रकारेण उक्तं इदानीन्तु समवायत्वेनेति भेदः, संयोगेनेति, यत् यत् संयुक्तं तत्तज्जातिमदेव इति जातिमदसंयुक्तम् असंयुक्तमेव इति तदभावः पूर्व्ववत् केवलान्वयीत्यर्थः अतः साध्यवदसमवेतस्याभावः संयोगेन वक्तव्यः तदा जातिमदसमवेतस्य परमाण्वादेः

त्वादावतिव्याप्तेः सविषयकमात्रस्यैव घटभिन्नविषयकत्वात् घटनिर्व्विकल्पकेऽपि घटत्वादिभानात्। नापि सम्बन्धमात्रेण, द्रव्यं सत्वादित्यादावतिव्याप्तेः वृत्तिमन्मात्रस्यैव स्वरूपसम्बन्धेन महाकाले वृत्तेः अवृत्तेरभावस्य केवलान्वयित्वादिति प्रत्युक्तम् ॥ १ ॥

---

संयोगेन मेयत्वाधिकरणे सत्त्वान्नातिव्याप्तिरिति मनसिकृत्याह, इदं न जातिमदिति। साध्यवदिति जात्यभाववति जात्यादौ समवायाप्रसिद्धेरित्यर्थः, आदिना संयुक्तपरिग्रहः। साधनतावच्छेदकेनेति साध्यवदवृत्तित्वमित्यत्रान्वितम् एवम् अपरत्रापि।

इदमित्यादि, रूपभिन्नं गुणत्वादित्यत्र हेतुतावच्छेदकसमवायसम्बन्धेन रूपभिन्नावृत्तीनां रूपत्वशुक्लत्वादीनां गुणत्वाधिकरणेऽपि सत्त्वान्नातिव्याप्तिर्घटत इति एतदिति, तथाच यत् यत् समवेतं तत्तदेतद्रूपभिन्ने समवेतमेव, अतएव घटादिकं विहाय रूपपर्य्यन्तानुधावनमिति, घटादिमात्रवृत्तेस्तु तदीय रूपादेरेव सुलभत्वात्। घटभिन्नमिति। अत्रतु विषयतासम्बन्धेन यत् यत् सम्बद्धं तदवश्यं घटभिन्ने सम्बद्धमिति घटमात्रविषयकस्याप्रसिद्धिः, तथाच घटभिन्ने विषयतासम्बन्धेन यन्न वर्त्तते तन्नवर्त्तते एव विषयतासम्बन्धेन, अतएव विषयतया तस्याभावः सार्व्वत्रिक इत्यतिव्याप्तिरितिभावः। नापीत्यादि द्रव्यं सत्वादित्यत्र द्रव्यत्वाधिकरणे महाकाले सम्बन्धमात्रेण यन्न वर्त्तते तन्न वर्त्तत एव

नापि स्वसमानाधिकरणात्यन्ताभावाप्रतियोगि-साध्यसामानाधिकरण्यं पर्व्वतीयवह्नेर्महानसीयधूम-समानाधिकरणात्यन्ताभावप्रतियोगित्वात् द्रव्यत्वादे-

---

विशेषणताविशेषेण वा साध्यवदवृत्तित्वं वक्तव्यं सर्व्वत्रैव तत्तद्‌व्यक्तित्वेन तत्तदन्यान्यत्वे तत्प्रकारक-प्रमाविषयकत्वे वा सुलभं, तेनैव सम्बन्धेन तदव-च्छिन्नसामान्याभावो वाच्य इति। केचित्तु नञ्व्यत्या-सेन असाध्यानि साध्यविरोधिनि साध्यासमानाधि-

---

कुत्रापि तथाच तेन सम्बन्धेन तस्याभावः सत्वाधिकरणे सुलभ-एव इति भावः ॥ १ ॥

ननु येन येन सम्बन्धेन साध्यवति न वर्त्तते तेन सम्बन्धेन तस्याभावः इत्यत्र तु यत्तदर्थयोरननुगमात्, साध्यवदवृत्तिपदार्था-भावस्य सामान्याभावरूपत्वं न घटते, अतएव पूर्व्वं सकलेत्युक्तम् अत आह, विशेषणतेति। तत्तद्व्यक्तित्वमिति स्वरूपभेदविशेष इत्यर्थः। ननु तत्तद्व्यक्तिभिन्नभेदस्य सम्प्रदायमते तत्तद्व्यक्तिमात्र-वृत्तिरूपाद्यात्मकतया विशेषणताविशेषेण अवृत्तित्वमसम्भवतीत्यत आह, तत्तदिति। अत्र तु अन्यान्यत्वं तत्तद्व्यक्तिमात्रवृत्तिरूपाद्या-त्मकमननुगमात्, नन्वेवमेव यत्र व्यभिचाराधिकरणं द्रव्यत्वादिकं तत्रान्यान्यत्वं नास्ति, तथाच पूर्व्वदोषतादवस्थ्यम् इत्यत आह, तत्तदिति।

रव्याप्यवृत्त्यव्याप्यतापत्तेश्च । न च प्रतियोगिविरोधित्वं व्याप्यवृत्तित्वं वा अभावविशेषणं देयं संयोगादौ साध्ये सत्त्वादेरनैकान्तिकत्वाभावप्रसङ्गात् । नहि प्रति

---

करणानीति यावत् तानि सामानाधिकरण्यानधिकरणानि यस्य तत्त्वम् । साध्यसामानाधिकरण्याभावव्यापकाभाव-प्रतियोगि-सामानाधिकरण्यसामान्यकत्वमिति तु फलितार्थः, अत्र च साध्यसामानाधिकरण्यं साध्यतावच्छेदकसम्बन्धेन साध्यवति हेतुताव-

---

तद्यक्तिमात्रवृत्तिरसाधारणः कश्चन धर्म्मः । अत्र च विषयत्वस्य यो विशेषणताविशेषः इत्यभिप्रेत्य पक्षान्तरमित्यपि कश्चित् । तेनैवेति, विशेषणताविशेषेणैवेत्यर्थः । सामान्याभावप्रतियोगितावच्छेदकं पुनर्व्विशेषणताविशेषेणैव. साध्यवद्वृत्तित्वमिति मिश्राणां द्वितीयमतमाह, केचित्त्वित्यादि । असाध्यानिति बहुवचनं व्यापकत्वमाविष्कर्त्तुम्, अन्यथा धूमवान् वह्नेरित्यत्र कस्यचित् साध्यासामानाधिकरण्यस्य हेतुसामानाधिकरण्यानधिकरणतयातिव्याप्तिः स्यादिति यावत्त्वस्य व्यापकत्वरूपतया व्याप्तेर्हेतुनिष्ठतया च तथैवाह साध्येत्यादिफलितार्थ इत्यन्तेन । धूमवान् वह्नेरित्यत्र धूमव्याप्यवह्निनिष्ठसामानाधिकरण्यं तादृशाभावप्रतियोग्येवेति सामान्यपर्य्यन्तम् । न चात्र सामान्याभावो वक्तुं शक्यते व्युत्क्रमेणाभिधानात् इति । अत्र च यथाश्रुते द्रव्यं सत्त्वात्

योगिविरोधी संयोगादेरपरोऽत्यन्ताभावोऽस्ति, अधि-
करणभेदेनाभावभेदाभावात् ॥ २ ॥

---

च्छेदकसम्बन्धेन वृत्तिः परञ्च सामानाधिकरण्यं हेतु-
तावच्छेदकसम्बन्धेन हेतुमति तेनैव सम्बन्धेन वृत्तिः,
तेन समवायेन पृथिवीत्वादेः साध्यतायां व्यभिचा-
रिणि कालिकसम्बन्धेन हेतौ द्रव्यत्वादेश्च समवायेन
साध्यतायां समवायेन हेतौ सत्वगुणत्वादौ नाति-
प्रसङ्गः ।

---

इत्यत्र द्रव्यत्वाधिकरणे महाकाले वृत्तिमन्मात्रस्यैववृत्तेः सम्बन्ध-
सामान्येन द्रव्यत्वसामान्यानधिकरणमवृत्तिरेव । तच्च हेतुसामा-
नाधिकरण्यानधिकरणमेवेत्यत आह अत्र चेति । क्रमेणसम्बन्ध-
विवक्षायाः फलमाह तेनेत्यादिहेतावित्यन्तेन, साध्यतावच्छेदक-
सम्बन्धेनेत्यस्य फलकथनम् अयमर्थः पृथिवीजगदाधारत्वात् इत्यत्र
साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताकथने सम्बन्धसामान्येनैव
साध्यवान् लब्धव्यः । अत्र च कालोऽपि निविशते हेतुतावच्छेदक-
कालिकसम्बन्धेन तद्वृत्तित्वाभावस्तद्वृत्तावेव, तत्र च तादृशहेतु-
सामानाधिकरण्याद्यभावोऽस्त्येवेति । इत्ते च तस्मिन् समवाय-
सम्बन्धेन पृथिवीत्वस्याधिकरणं द्वेधा जन्यम् अजन्यं च । तत्र
जन्यमात्रस्य कालोपाधित्वेऽपि प्रलयमात्रीयपदार्थस्य यावत्

न वा संयोगेन वह्न्यादौ साध्ये समवायेन तद्-
व्याप्यस्य रूपविशेषादेः कालिकसम्बन्धेनाधिकरणे

---

पृथिवीत्वमात्रसमवायिषु कालिकसम्बन्धेनावृत्तित्वेऽपि कालिक-
सम्बन्धेन हेत्वधिकरणे महाकाले तेनैव सम्बन्धेन वृत्तित्वेन च
नातिव्याप्तिः, अतएव पृथिवीत्वपर्य्यन्तानुधावनम् । प्रथमदले हेतु-
तावच्छेदकसम्बन्धेनेत्यस्य व्यावृत्तिमाह, द्रव्यत्वादेश्चेति । एतत्पदा-
दाने द्रव्य सत्त्वादित्यादौ द्रव्यत्वसमवायिनि महाकालेऽपि सम्बन्ध-
सामान्येनावर्त्तमानस्य तादृशसामानाधिकरण्याभाववत्त्वादति-
व्याप्तिः । तद्दाने च द्रव्यत्वसमवायिनि काले समवेतत्वाभाव-
वति गुणत्वादौ सत्त्वसमवायिगुणसमवेतत्वसत्त्वात् नातिव्याप्तिः ।
सत्त्वे हेतावन्यदादाय लक्षणगमनं गुणत्वे तु स्वमादायाऽपि तत्
इति, विरुद्धस्य गुणत्वस्यानन्तराभिधानमिति ।

हेतु समानाधिकरणाभावेत्यस्य सम्बन्धव्यावृत्तिमाह, न
वेत्यादि । स्पन्दत्वादेरिति वृत्तावित्यनेनान्वितं समवायेनेत्यपि
तथैव । तथाचायं वह्निमान् एतद्रूपादित्यत्र वह्निसंयोगिन्यसम-
वेतं कालपरिमाणं स्पन्दत्वञ्च, तत्र द्वितीयदले प्रथमहेतुतावच्छे-
दकसम्बन्धादाने तद्रूपस्याधिकरणं महाकालः स्पन्दश्चेति । तत्
समवेतत्वं तदुभयोरेवेत्यव्याप्तिप्रसक्तिः तद्दाने च समवायेन तद-
धिकरणे पर्व्वतादौ सुतरां तदभाव इति, यद्वा समवायेन वृत्ता-
वित्युत्तरान्वितं वृत्तावित्यत्र च समवायेन पूर्व्ववद्वृत्तिर्बोध्या,
तथा चरमहेतुतावच्छेदकसम्बन्धादाने वह्निसंयोगिसमवेतत्वाभाव-

कालपरिमाणस्पन्दत्वादेः समवायेन तदधिकरणे घटादेः संयोगेन वृत्तावपि चातिप्रसङ्गः। सम्बन्धविशेषेण व्याप्यत्वलाभाय साधिकरणत्वमित्याहुः तच्चिन्त्यम्।

---

वतो घटादेः समवायेन रूपविशेषाधिकरणे पर्व्वतादौ संयोगेन वृत्तावव्याप्तिप्रसक्तिः। तत्प्रदाने च समवायेन वृत्त्यभावो वर्त्तत एवेति भावः, न च स्पन्दावच्छिन्नकालस्यैव खण्डकालत्वात् स्पन्दमात्रस्य कथं तदधिकरणत्वं इति वाच्यं स्पन्दावच्छिन्नकालस्य कालावच्छिन्नस्पन्दस्य चाधिकरणतायां विनिगमनाविरहेन तदुभयाधिकरणतायामेव विश्रामात्, व्यावर्त्तकत्वेन चात्यन्तावश्यकत्वेन स्पन्दादेरेवाधिकरणत्वस्याङ्गीकर्त्तुमुचितत्वाच्च। कालसिद्धिस्तु प्रमाणान्तरेणैवेति भावः, ननु तावतैव सर्व्वसामञ्जस्ये स्वाधिकरणपदं व्यर्थमेव न च साधने सामानाधिकरण्यज्ञानस्य हेतुत्वलाभार्थं तदिति मिश्रैरुक्तमेव सम्यगिति वाच्यं एवमपि लक्षणे वैयर्थ्यस्य दुर्निवारत्वात् इत्यभिप्रेत्याह, सम्बन्धविशेषेणेति, तच्चिन्त्यमिति इदमेतद्रूपभिन्नं गुणत्वादित्यादौ विशेषणताविशेषेण साध्यवति तद्रूपभिन्ने समवायेन यत्र वर्त्तते तत्र वर्त्तत एव कुत्रापि इत्यतिव्याप्तिरेव सम्बन्धान्तरेणापि घटभिन्नं ज्ञानात् इत्यत्रापि। अत्रेदं चिन्त्यं साध्यतावच्छेदकसम्बन्धेन साध्यवति पूर्व्वोक्तरीत्या विशेषणताविशेषेण यत्र वर्त्तते तद्धेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे विशेषणताविशेषेण न वर्त्तिष्यते इत्युक्तौ तु नायं दोष इति।

यथाश्रुतं यथासम्भवं विकल्प्य दूषयति नेत्यादि। ननु अप्रतियोगिपदेन प्रतियोगितानवच्छेदकावच्छिन्नं वक्तव्यम् अत आह द्रव्यत्वादेरिति। प्रतियोगिविरोधित्वं तदधिकरणावृत्तित्वं, व्याप्यवृत्तित्वं स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं, अधिकरणेति। तथासत्यभाव एव न सिध्येदिति भावः। संयोगाद्यभावस्य द्रव्ये प्रतियोगिसामानाधिकरण्यम्, अव्याप्यवृत्तित्वञ्च प्रतियोग्यधिकरणीभूतद्रव्यवृत्तित्वं, स्वाधिकरणीभूतद्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वं, गुणे च प्रतियोग्य-

---

ननु स्वविवक्षायां मूलोक्तदोषासङ्गतिरित्यत आह, यथाश्रुतमिति। यथा सम्भवमिति यत्र विकल्पे यद्घटते तत्र तथेत्यर्थः, तेन तदधिकरणानधिकरणत्वस्य केवलान्वयिनि प्रसिद्धावपि न क्षतिः तथासतीति नानाधिकरणानां तादृशं नास्तीति बुद्धिनियामकत्वकल्पनमपेक्ष्य लाघवादेकताभावः कल्प्यते अधिकरणभेदेनाभावभेदे तु अधिकरणसमसंख्याभावकल्पनमिति अतिरिक्तत्वकल्पनञ्चेति महद्गौरवमेवेति भावः।

ननु प्रतियोगिसामानाधिकरण्यासामानाधिकरण्यादिविरुद्धधर्म्माध्यास एवाभावभेदको ऽस्त्वित्यत आह, संयोगाद्यभावस्येति। प्रतियोगीति अत्र द्रव्यपदं स्वरूपकथनपरम्। यद्वा एतन्मते प्रतियोग्यधिकरणवृत्तित्वस्य व्याप्यवृत्तित्वाद्गुणेऽपि तत्स-

नापि साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्य-वत्कत्वं व्याप्तिः, मूले वृक्षः कपिसंयोगवान्नेत्यबाधित-प्रतीतेः तदन्योन्याभावस्यापि तत्र सत्त्वात्। न चैवं भेदाभेदः अवच्छेदकभेदेन तत्सत्त्वाभ्युपगमात्। साध-नवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवद्यस्येतिषष्ठ्यर्थ--व्याप्यव्यापकभावानिरूपणात् साध्यसाधनयोः व्याप्ति-

---

सामानाधिकरण्यं व्याप्यवृत्तित्वञ्च, प्रतियोग्यनधिकर-णीभूतगुणवृत्तित्वं, स्वाधिकरणीभूतगुणनिष्ठात्यन्ताभा-वाप्रतियोगित्वं, एतानि च न भेदकानि अविरोधात्, सामान्यतश्चाव्याप्यवृत्तौ प्रतियोगिसमानाधिकरणे च न तथाव्यतिरेक इति भावः ॥ २ ॥

ननु साध्यवान् यस्येति साध्यवति सम्बन्धोऽन्वेष्टव्यः स चाधिकरणत्वं साध्यसामान्ययोरपि सामानाधि-

---

त्वेन तत्रापि तदापद्येतेति तद्वारणाय द्रव्येति तथाच द्रव्याव-च्छेदेनैवेत्यर्थः, एवमग्रेऽपि द्रव्येति अव्याप्यवृत्तित्वस्य निरुक्तिः स्वाधिकरणेति अत्र गुणपदादाने स्वाधिकरणीभूतवृत्त्यन्ताभावा-प्रतियोगित्वस्य सामान्याभावरूपतया तादृशद्रव्यवृत्तिप्रकृता-भावे सम्भव इति तत्पदमुक्तम् ॥ २ ॥

स चेति अन्योन्याभाव गर्भलक्षण पक्षे, अत्यन्ताभावलक्षण-

निरूप्यत्वात् वह्निमत्त्वर्वतस्य धूमवन्महानसनिष्ठान्यो-न्याभावप्रतियोगित्वाच्च, विशेषाभावकूटादेवाभावव्यव-हारोपपत्तौ सामान्याभावे मानाभावात् ॥ ३ ॥

---

करणमेव इत्यतो दूषणान्तरमाह साध्येति। साध्यत्व-साधनत्वे व्याप्तिप्रतियोगित्वाप्रतियोगित्वे यत्तद्भ्यामेव व्याप्तिर्न्निर्वक्तव्या इत्यत आह वह्निमदिति। ननु यत् समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यद्रू-पावच्छिन्नं न भवति तद्रूपावच्छिन्नेन समं तस्य सामानाधिकरण्यं व्याप्तिरित्यर्थः। न च धूमसमा-नाधिकरणान्योन्याभावप्रतियोगितावच्छेदकवह्नित्वाव-च्छिन्नो वह्निः, धूमवान् वह्निमानित्यप्रतीतेरत आह विशेषेति।

---

मभिप्रेत्याह, साध्येति। तत्र हि अप्रतियोगिना साध्येन समं सामानाधिकरण्यमेव सम्बन्ध इति ध्येयम्।

ननु साध्यत्वं सिद्धिविषयत्वं साधनत्वञ्च, सिद्धि करणत्वं तत्कथं मूलोक्तात्माश्रय इत्यत आह, साध्यत्वसाधनत्वे इति। वह्नित्वा-वच्छिन्नो वह्निरिति न च तत्तद्वह्नेरेव वह्नित्वावच्छिन्नतया तस्य-चान्योन्याभावप्रतियोगितावच्छेदकतयेदमसङ्गतमिति वाच्यम्। परम्परया यादृशधर्म्मस्यानवच्छेदकत्वं इति सिद्धान्तलक्षणे वक्ष-

नापि साधनसमानाधिकरणयावद्धर्म्मनिरूपित-वैयधिकरण्यानधिकरणसाध्यसामानाधिकरण्यं साधन-समानाधिकरणस्य प्रमेयत्वादेः वैयधिकरण्याप्रसिद्धेः ।

---

य एव प्रत्येकं वह्निमद्भेदाः धूमसमानाधिकरणाः त एव चैकाधिकरणवृत्तित्वावच्छिन्नाः वह्निमत्सामान्य-भेदबुद्धिं जनयन्ति तत्प्रतियोगितावच्छेदकवह्नित्वाव-च्छिन्नोवह्निरिति भवत्यव्याप्तिः ॥ ३ ॥

साधनेति वैयधिकरण्यं तदनधिकरणवृत्तित्वं तच्च केवलान्वयिनः साधनस्याप्रसिद्धं अतिप्रसञ्जकञ्च,

---

मानरीत्या विवक्षणादिति भावः । परम्परया तादृशधर्म्मत एव तथैव उपष्टम्भकप्रतीतिमाह, धूमवानिति । विशेषेतीत्य-नन्तरं तथाच पूरणीयम् ॥ ३ ॥

प्रमेयत्वादेरिति मूलमनुरुन्धान आह, वैयधिकरण्यमिति । पृथिवीत्यादि द्रव्यत्वानधिकरणाधिकरणत्वस्य पृथिवीत्वे ऽसत्वात् इति भावः ।

धूमवान् वह्नेरित्यत्र तु कदाचिदयोगोलकीयवह्न्यनधि-करणाधिकरणत्वं धूमे वर्त्तत इति अखण्डहेतुत्वानुसरणम् । धर्म्मपदन्तु मूलोक्तं स्वरूपकथनपरमेवेति ।

यद्यपीत्यादि । द्रव्यं पृथिवीत्वादित्यत्र मात्रपदे दत्तेऽपि दूषणा-न्तरमाह, तदनधिकरणेति । तत्साधनसमानाधिकरणं घटत्वादि,

महानसादौ समवायितया वह्निवह्निमतोरत्य-न्तान्योन्याभावयोः सत्त्वात् धूमादावप्युक्तलक्षणा-भावाच्च। अथानौपाधिकः सम्बन्धो व्याप्तिः उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकः, व्यापकत्वन्तु तन्निष्ठात्यन्ताभावाप्रतियोगित्वं व्यभिचारे चावश्यमु-पाधिः, प्रतियोगित्वं न विरोधित्वम्।

---

पृथिवी द्रव्यत्वादित्यादौ, अतः समानाधिकरणपदो-पादानं, धूमादेरपि न वह्न्यादिसमानाधिकरण-द्रव्य-त्वाद्यनधिकरणवृत्तित्वम अतोयावदिति।

यद्यपि पृथिवीत्वादिसमानाधिकरणघटत्वपट-त्वाद्यनधिकरणवृत्तित्वं द्रव्यत्वादेस्तदनधिकरणमात्र-वृत्तित्वञ्च निखिलघटपटादिरूपाणां, तथापि तादृश-धर्म्मानधिकरणमात्रवृत्तित्वानवच्छेदकसाध्यतावच्छेदक-वत्त्वं बोध्यं, न हि पृथिवीत्वसमानाधिकरणस्तादृशः

---

निखिलेत्यादि, रूपवान् पृथिवीत्वादित्यत्र बोध्यं, रूपस्य प्रतिव्य-क्तिभिन्नत्वात्, तादृशेति, साधनसमानाधिकरणेत्यर्थः। नहीत्यादि पृथिवीत्वादिसमानाधिकरणधर्म्मस्य सर्व्वस्यैवाधिकरणे रूपं तत्र च रूपत्वस्यापि वृत्तावतस्तादृशधर्म्मानधिकरणमात्रवृत्तित्वावच्छे-दकत्वं तस्य व्याहतमिति।

कश्चिदेको धर्म्मो यदनधिकरणमात्रवृत्तितानवच्छेदकं रूपत्वादि, धूमत्वादिकन्तु वह्न्यादिसमानाधिकरणायोगोलकत्वाद्यनधिकरणमात्रवृत्तितावच्छेदकं, तदवच्छेदकत्वञ्च तदनतिरिक्तवृत्तित्वं तच्च तच्छून्यधर्म्मावृत्तित्वं, तेन मेयत्वसमानाधिकरणगुणत्वाद्यनधिकरणमात्रवृत्तितानधिकरणगगनादिवृत्तित्वेऽपि द्रव्यत्वस्य द्रव्यसाधकमेयत्वेनातिप्रसङ्गः वस्तुतस्तु तादृशधर्म्मानधि-

---

नन्ववच्छेदकत्वमनतिरिक्तवृत्तित्वं तथाच द्रव्यवान् मेयत्वादित्यत्र द्रव्यत्वस्य मेयत्वसमानाधिकरणगुणत्वाद्यनधिकरणमात्रवृत्तितावच्छेदकत्वं न सम्भवति, तादृशवृत्तित्वानधिकरणे वृत्तित्वसामान्याभाववति गगनादौ सत्वात् तथाचानवच्छेदकत्वमित्यतिव्याप्तिरतस्तन्निर्वक्ति तच्चेति, तथाच तदृशवृत्तित्वाभाववति धर्म्मेऽवृत्तित्वमेव वक्तव्यं, गगनस्य तु धर्म्मत्वमेव नास्ति धर्म्मरूपाणि यानि यानि द्रव्याणि तानि गुणत्वानधिकरणमात्रवृत्तीन्येवेति भावः। एतदेव विशदयति, तेनेत्यादि। ननु सत्ताद्रव्यत्वोभयवान् जातिमत्त्वादित्यादौ उभयत्वस्य सत्तावृत्तितया सत्तायाश्च तादृशधर्म्मानधिकरणमात्रवृत्तित्वशून्यतया तादृशवृत्तित्वशून्यावृत्तित्वरूपमवच्छेदकत्वं व्याहतमेवेति अतिव्याप्तिरत आह, वस्तुतस्त्विति। स्वमवच्छेदकत्वेनाभिमतं तथाचोभयत्वावच्छिन्नाधिकरणतया द्रव्यमात्रवृत्तित्वेन द्रव्यस्य च तादृशधर्म्मानधिकर-

सहानवस्थाननियमलक्षणं गोत्वाश्वत्वयोरतथात्वात् अत्रान्योन्याभावप्रतियोगिन्यसत्वाच्च ॥ ४ ॥

---

करणमात्रवृत्तिस्वावच्छिन्नाधिकरणताकत्वं तदवच्छेदकत्वं वाच्यं तेन सत्ताद्रव्यत्वोभयवान् गुणान्यत्वविशिष्टसत्तावान् वा जातिमत्त्वादित्यादौ नातिप्रसङ्गः सत्तायाः गुणत्वाभाववन्मात्रवृत्तित्वविरहेऽपि उभयत्वाद्यवच्छिन्नाधिकरणतायाः गुणत्वाभाववन्मात्रवृत्तित्वात् । प्रमेयत्वादेरिति ।

ननु व्यतिरेकित्वेन धर्म्मो विशेषणीयः, वस्तुतस्तु यावत्पदं तादृशस्य कस्यापि न वैयधिकरण्यावच्छेदकमेतावन्मात्रस्फोरणाय, तथाच साधनसमानाधिक-

---

णत्वान्नातिव्याप्तिरिति । मात्रपदञ्च, द्रव्य पृथिवीत्वादित्यत्र पृथिवीत्वसमानाधिकरणघटत्वादेरनधिकरणवृत्तिरेव द्रव्यत्वत्वावच्छिन्नद्रव्याधिकरणतेत्यतिव्याप्तिवारणाय, एतदेव स्पष्टति, तेनेत्यादि । ननु तादृशवृत्तिताशून्यधर्म्मपर्य्याप्तकत्वमेव वक्तव्यं उभयत्वस्य सत्ववृत्तित्वेऽपि तदपर्य्याप्तत्वादिति नातिव्याप्तिरित्यतः स्थलान्तरमाह, गुणान्यत्वेति । अत्र च विशिष्टवृत्तिधर्म्मस्य विशेष्ये पर्य्याप्तत्वस्वीकारात् इति ध्येयम् । प्रमेयत्वादेरितीति । एतद्दूषणरक्षणायैव तदनधिकरणाधिकरणत्वमुक्तमिति भावः ।

विशेषणदानप्रयासादाह, वस्तुतस्त्वित्यादि । तादृशस्येति साध-

रणधर्म्मनिरूपितवैयधिकरण्यावच्छेदकं यद्यत्तद्भिन्नधर्म्म-
वता यावत्तादृशावच्छेदकत्वशून्यधर्म्मवता वा समं
सामानाधिकरण्यमिति पर्य्यवसितं अतो दोषान्तरमाह
महानसादाविति । तथाच तदनधिकरणत्वं तदभावा-
धिकरणत्वं तद्भिन्नत्वं वा इयमपि दुष्टमित्यर्थः ।

एतेन तदधिकरणावृत्तित्वमत्र वैयधिकरण्यमिति

---

नसमानाधिकरणस्येत्यर्थः । तथाचेत्यादि । वैयधिकरण्यावच्छेदक-
स्यैव यावत्त्वविवक्षणात् न प्रमेयत्वमादायाप्रसिद्धिः, वैयधिकरण्यस्य
सम्बन्धभेदभिन्नतया सामान्याभावासम्भवात् तदभावकूटमाविष्क-
र्त्तुमाह, यावदिति । नन्विदं सत्तावज्जातिमत्त्वादित्यत्र सत्तात्वस्य
गुणकर्म्मान्यत्वविशिष्टसत्तात्वाभिन्नतया तस्य च तादृशावच्छेदक-
त्वेनाव्याप्तिरित्यत आह, यावत्तादृशेति । तथाच तादृशावच्छेदक-
त्वस्य गुणकर्म्मान्यसत्तात्वपर्य्याप्ततया शुद्धसत्तात्वे तस्याभाव इति
मूलसङ्गमनाय विकल्पयति, तथाचेत्यादि । साधनसमानाधिकरण-
धर्म्मस्य साध्यस्य समवाय सम्बन्धेन तदभाववति तद्भिन्ने च पर्व्व-
तादौ तस्यैव संयोगेन वृत्तित्वसत्वात्, साधनसमानाधिकरण-
धर्म्माभाववद्वृत्तित्वं तद्भिन्नावृत्तित्वञ्च वैयधिकरण्यं दुष्टमित्यर्थः,
तथाच पूर्व्वास्वरसेनैव ग्रन्थावतार इति भावः ।

नन्वस्तु मूलं विरुद्धं, तदधिकरणानधिकरणत्वरूपवैयधिक-
रण्यविवक्षणादेव लक्षणं सुस्थमित्यत आह, एतेनेति । महान-

निरस्तं, समवायितया महानसवृत्तित्वं वह्नौ नास्तीतिप्रतीतेर्वह्न्यादेरपि तादृशवैयधिकरण्याधिकरणत्वात्सम्बन्धविशेषेण वैयधिकरण्यविवक्षायान्तु नोक्तदोष इति ध्येयम्।

उपाधिपदस्य साध्यसमव्याप्तवचनतया आत्माश्रयप्रसङ्गादाह साध्यव्यापकेति। व्यापकत्वं व्याप्तिनिरूपकत्वमात्माश्रयादिग्रस्तमत आह तद्वन्निष्ठेति। यत्रोपाधिरव्याप्यवृत्तिर्नानाव्यक्तिको वा तत्रापि व्याप्य-

---

सादावित्यादिदोषेणेत्यर्थः। एतदेव योजयति, समवायितयेत्यादि।

सम्बन्धविशेषेणेति। येन सम्बन्धेन धर्म्मस्य हेत्वधिकरणवृत्तित्वं तेन तदधिकरणे साध्यतावच्छेदकसम्बन्धेनावृत्तित्वविवक्षायामित्यर्थः। यद्वा हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे विशेषणताविशेषेण यद्वर्त्तते विशेषणता विशेषेण तत्तदधिकरणे साध्यतावच्छेदकसम्बन्धेनावृत्तित्वमिति।

समव्याप्तेत्यादि। व्याप्तिसामान्यनिरूपणमभिप्रेत्यात्माश्रयो बोध्यः, अन्यथा वह्निधूमव्याप्तिनिरूपणे तदप्रवेशात् तदनापत्तेरिति एवमुत्तरत्रापि अतएव तत्रादिपदमपि। यथाश्रुतलक्षणं रक्षितुमाह, यत्रेति। द्रव्यं सत्वादित्यत्र संयोगस्य उपाधिलक्षणागमनं प्रकृते विरुद्धं न हि मयेदं स्वतन्त्रमुपाधिलक्षणं क्रियते किन्तु अनौ-

वृत्तिरखण्डस्य अन्ततस्तद्वद्भिन्नत्वप्रकारकप्रमाविषयत्वा-
भावादिरेवास्ति। यदि च तस्यापि विशेषणान्तरविशि-
ष्टस्य द्वित्वाद्यवच्छिन्नस्य वा तत्राभावसम्भवस्तदा साध्य-
समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकीभूत-
साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदक-
धर्म्मवत्त्वं दलद्वयार्थौ बोध्यः।

---

पाधिकत्वरूपव्याप्तिघटकतयेति येन तस्याव्याप्तिराशङ्क्येत इति कदा-
चित्तल्लक्षणे प्रतियोगिव्यधिकरणपदप्रक्षेपमभिप्रेत्याह, नानेति।
अखण्डः सर्व्वसाध्यवद्वृत्तिरेकः तथाच साध्यवदन्तरनिष्ठाभावप्रति-
योगित्वं तस्य नास्तीति। सर्व्वत्र एकजातीयसम्बन्धमभिप्रेत्याह,
अन्तत इति, तद्वदिति। साध्यवदित्यर्थः।

ननु साध्यवत्त्वप्रकारकप्रमाविषयत्वमेव तथाविधं वर्त्तते इत्यलं,
तादृशाभावपर्य्यन्तानुधावनेन इति चेन्न, सम्प्रदायमते विषयतायाः
स्वरूपसम्बन्धात्मिकायाः प्रतिव्यक्तिभिन्नाया ऐक्याभावात्। अभा-
वीयविशेषणताविशेषजिज्ञासया तदित्यपि कश्चित्। ननु विशे-
षणान्तरस्य विशिष्यापेक्षया अन्यत्वमते विशिष्टस्य न तदभावप्रति-
योगित्वमित्यत आह, द्वित्वाद्यवच्छिन्नस्य चेति। यदिकारस्तु
क्लृप्ताभावस्यैव द्वित्वावच्छिन्नाभाववादिनमभिप्रेत्य, तदेत्यादि
अत्राप्यनवच्छेदकत्वं यादृशप्रकारतया तादृशप्रकारतयैव तथाव-
च्छेदकत्वं ग्राह्यं तेन सङ्केतो शुद्धस्यानवच्छेदकस्यापि किञ्चिद्वृत्ति-

अनवस्थां निरसितुमाह प्रतियोगित्वमिति सहेति। एकदेशकालावच्छेदेनेति पूरणीयं तेन नाव्याप्यवृत्तेरभावस्य प्रागभावादेश्च प्रतियोगितायामव्याप्तिः।

अत्रान्योऽन्येति। अत्र समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकाभाववति महानसादौ संयोगादिना वह्न्यादेर्वृत्तेः। येन सम्बन्धेनाभावस्तद्वति तेनावृत्तिर्वक्तव्या, इत्थञ्च तेन सम्बन्धेनासम्बद्धत्वोक्तौ नायं दोषः। अन्योन्याभावस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकतया तद्वति तेन सम्बन्धेन प्रतियोगिनो अधिकरणेऽसम्बद्धत्वात् परन्तु समवायेन सत्ताया अभावस्य प्रतियोगितामव्याप्तिः तद्वति समवायेन वृत्तेरप्रसिद्धेः तादृश स्वसम्बन्धस्याधिकरणावृत्तितत्कत्वमित्यभिधाने च

---

त्वविशिष्टतयाऽवच्छेदकत्वेऽपि न क्षतिः, अनवस्थामिति प्रतियोगित्वस्य सहानवस्थाननियमलक्षणतया तस्य च नियमान्तरप्रविष्टतया अनवस्थेत्यर्थः। क्रमेण पूरणीयस्य व्यावृत्तिमाह, तेनेत्यादि।

वक्तव्येति तत्सम्बन्धावच्छिन्नाभाववति तेन सम्बन्धेनावृत्तिः प्रतियोगिनो वक्तव्या इति भावः। तथापि तादात्म्यसम्बन्धावच्छिन्नान्योन्याभाववति तादात्म्येन वृत्तेरप्रसिद्धेः अवृत्तित्वमप्रसिद्धम्

किन्तु यथाधिकरणाभावयोः स्वरूपविशेषः सम्बन्धः तथा प्रतियोगित्वमनुयोगित्वमपि, अभावविरहात्मत्वं वेति चेत् यत्किञ्चित्साध्यव्यापकसाधनाव्यापकधर्म्म-निषेधो न धूमादौ प्रकृतसाध्यव्यापकसाधनाव्यापक-धर्म्मश्च सिद्ध्यसिद्धिभ्यां न निषेद्धुं शक्यः यावत्साध्य-व्यापके प्रमेयत्वादौ साधनाव्यापकत्वं यावत्साधना-

---

व्यधिकरणसम्बन्धावच्छिन्नाभावप्रतियोगितायामव्याप्तिः सिद्धान्तलक्षणवक्ष्यमाणरीत्या च खण्डशः प्रसिद्ध्या तत्परिहारोऽपि इति ध्येयम् ॥ ४ ॥

---

इत्यत आह, इत्यञ्चेति। तथाचावृत्तित्वमित्यत्रासम्बद्धत्वविवक्षणा-दव्याप्त्युद्धारः। एतदेव स्पष्टयति, अन्योन्याभावस्येति। तद्वतीति-समवायसम्बन्धावच्छिन्नसत्ताभाववति इत्यर्थः। तच्छब्देन तादृशा-भावोक्तेः, तच्च जात्यादिरूपमेवेति तत्समवेतत्वस्याप्रसिद्धिः। तादृशेतिप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसम्बन्धियदधि-करणं तदवृत्तितत्कत्वमित्यर्थः, तच्छब्देन तादृशाभाव उक्तः। व्यधिकरणेति। संयोगसम्बन्धावच्छिन्नजात्यभावस्य संयोगसम्बन्धा-वच्छिन्नजात्यधिकरणावृत्तित्वे ग्राह्ये संयोगसम्बन्धावच्छिन्नजात्य-धिकरणत्वमेवाप्रसिद्धमिति। सिद्धान्तलक्षणेति। सर्व्वेषु संयोगेषु जातिप्रतियोगिकत्व-तदभावाधिकरणानुयोगिकत्व-सामान्योभया-भाव इति रीतेर्वक्ष्यमाणतयेत्यर्थः॥ ४ ॥

व्यापके च घटत्वादौ साध्यव्यापकत्वं निषिध्यत इति चेन्न व्यधिकरणत्वात्, यावत्साधनाव्यापकमव्यापकं तत्साध्यस्य, यावत्साध्यव्यापकं व्यापकं वा यस्य तत्त्वं तदिति चेन्न सोपाधेरपि तथात्वात् ॥ ५ ॥

---

अभावविरहात्मत्वमिति। न चान्योन्याभावप्रतियोगितावच्छेदकयोरप्रसक्त्यतिप्रसक्ती च प्रकृतोपयोगितामात्रस्य लक्षणत्वे तु लक्षणेऽत्यन्ताभावपदवैयर्थ्यम्। सर्व्वत्र नित्यस्य नित्यसाधारणरूपस्य वोपाधि-

---

अप्रसक्तिः अन्योन्याभावप्रतियोगिनि तस्यान्योन्याभावाभावात्मकत्वाभावात्। अतिप्रसक्तिस्तत्त्वावच्छेदके तस्य तदात्मकत्वादिति। प्रकृतेति। व्यापकत्वोपयोगिप्रतियोगितामात्रस्येत्यर्थः। मात्रपदेनान्योन्याभावप्रतियोगिता प्रतिक्षिप्ता. तथाचेदं पर्य्यवसन्नं तद्वृत्तिको योऽत्यन्ताभावस्तदभावरूपत्वं यत्प्रतियोगित्वं तदभावो यत्र तद्व्यापकमित्यर्थः। वैयर्थ्यमिति। धूमवति वर्त्तते योऽन्योन्याभाव आर्द्रेन्धनस्य तदभावाभावरूपत्वमार्द्रेन्धनस्य नास्तीति अन्योन्याभाववारकात्यन्ताभावपदं निरर्थकमिति। न चात्यन्तपदस्यैव वैयर्थ्ये अभावपदपर्य्यन्तं किमर्थमिति वाच्यं तद्वन्निष्ठाप्रतियोगित्वमित्यस्य निरुक्तस्य सामञ्जस्यादिति। नन्वेवं धूमव्यापकत्वमार्द्रेन्धनादावसम्भवि धूमवन्निष्ठस्य प्रागभावादेरभावरूपत्वादार्द्रेन्धनस्येत्यत आह, सर्व्वत्रेति। अत्रायोगोलकान्यत्वादेरेवोपाधित्वं आर्द्रे-

सम्भवात्तद्भेदप्रतियोगितावारणाय संसर्गाभावपरतया तस्य सार्थकत्वात् इति वाच्यम्। विरहपदस्य तज्-

---

न्धनादेरनुपाधित्वन्तु संयोगानुपाधित्ववद्व्याप्तिलक्षणे न दोषकर-मिति, ननु तद्व्याप्यार्द्रेन्धनादीनामुपाधित्वव्यवहारस्तान्त्रिकानां अभिप्रेत इत्यत आह, नित्यसाधारणेति, तथाचार्द्रेन्धनादेरपि अयोगोलकान्यत्वाद्यन्यान्यत्वेनैवोपाधिता न चार्द्रेन्धनत्वमेव प्राग-भावप्रतियोगितानवच्छेदकमिति तेनैव रूपेणानुपाधित्वसम्भवे किमेतावत्प्रतिबन्धेनेति वाच्यं तादृशप्रागभावप्रतियोगितात्वेनानु-गतीकृतप्रतियोगितानतिरिक्तवृत्तित्वेन तेषां विवादग्रस्तत्वान्नि-त्यसाधारण्यविवक्षणेत्वविवादादिति इतरथाभेदप्रतियोगितासाधा-रणनिरूपणे। नन्विदमसङ्गतं आर्द्रेन्धनादीनां दर्शितनित्य-साधारणरूपादिसत्त्वेन भेदप्रतियोगित्वेऽपि अयोगोलकावृत्तित्वादि-रूपेण उपाधित्वस्य दुर्व्वारत्वादिति। तदवच्छिन्नभेदस्य धूमवत्यसम्भ-वात्, धूमवन्निष्ठाभावसामान्यप्रतियोगितानवच्छेदकत्वं वह्निम-न्निष्ठाभावप्रतियोगितावच्छेदकत्वं च तत्रात्तुसमिति क्व प्रकृत-व्याप्तिलक्षणे दोषः, येन तदर्थमत्यन्ताभावपदं सार्थकमिति चेन्न, एतस्य रूपान्तरेणापि उपाधित्वव्यवस्थापनतात्पर्य्यकत्वात् पर्व्वतो वह्निमान् धूमवदवयवधूमवदन्यतरत्वादित्यत्र धूमवति धूमवदव-यवावृत्तिभेदस्य सुलभत्वाच्चेति अत्र गोत्वभेदभिन्नत्वं साध्यं, मेयत्वं हेतुः तत्र यावन्त उपाधयः सम्भवन्ति तावतां भेदो गोत्वभेदे वर्त्तते स चाभावमात्राधिकरणकत्वेन तत्स्वरूपतया साध्यवन्निष्ठभेदप्रति-

ज्ञानप्रतिबन्धकज्ञानविषयार्थकत्वात् । प्रतिबध्नाति हि तादात्म्येन प्रतियोगिज्ञानमन्योन्याभावबुद्धिं प्रतिबन्धकत्वञ्चात्र एककालावच्छेदेन एकत्रावर्त्तमानत्वम् अभावपदस्य स्वाभावपरत्वात् । वस्तुतस्त्वेकसम्बन्धावच्छिन्नायास्तत्समानाधिकरणाभावप्रतियोगिताया अन-

---

योगित्वं सर्व्वेषामुपाधीनामिति, अत्यन्तपदं अत्यन्ताभावत्वनिरूपकप्रतियोगितालाभायेति नव्याः । समानप्रकारकमेव ज्ञाने प्रतिबन्धकमित्यभिप्रेत्याह, विरहेत्यादि । प्राचीनमते प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य प्रतिबन्धकत्वेऽपि समानप्रकारकत्ववादिनो मते तादात्म्येन प्रतियोगिज्ञानमेव प्रतिबन्धकमिति भावः ।

प्रतियोगिज्ञानमिति । तादात्म्येनेत्यर्थः । ननु प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वं तच्चात्माश्रयादिग्रस्तं इत्यत आह, प्रतिबन्धकत्वञ्चेति । घटज्ञानतदभावज्ञानयोरेकत्रावर्त्तमानत्वमसम्भवग्रस्तमित्यत आह, एककालावच्छेदेनेति । एककालावच्छेदेनेत्याद्यपि तथैव इत्यत आह, एकत्रावर्त्तमानत्वमिति ।

ननु घटाभावज्ञानेन समं यस्याङ्कुरस्य ज्ञानमेककालावच्छेदेनैकत्रात्मनि न जातं तत्राङ्कुरे घटाभावप्रतियोगित्वापत्तिरेवं घटत्वेऽपि तदापत्तिः, घटान्योन्याभावधीविरोधिधीविषयत्वादित्यत आह, अभावपदस्येति । तथाच स्वाभावज्ञानप्रतिबन्धकज्ञानविषयत्वमिति लक्षणार्थः । वक्ष्यमाणास्वरसादाह, वस्तुतस्त्विति ।

वच्छेदकमपि भवत्येव सम्बन्धान्तरावच्छिन्नायाः तस्या अवच्छेदकम्। अतो यत्सम्बन्धावच्छिन्नायाः साध्य-समानाधिकरणाभावप्रतियोगितायां अनवच्छेदकं तत्-सम्बन्धावच्छिन्नाया एव साधनसमानाधिकरणाभाव-प्रतियोगिताया अवच्छेदकं तद्वाच्यम्।

तथाच संसर्गाभावत्वमनुपादेयमेव वाशब्दोऽनास्व-रससूचनाय, स च व्यधिकरणसम्बन्धेन सर्व्वस्य प्रति-योगिनस्तादृशभ्रमे मानाभावात्। स्वाभावसम्बन्धित्वस्य स्वाभावज्ञानविषयत्वस्य वा लघोः सर्व्वत्र सम्भवित्वात्,

---

तमेवोद्घाटयति, सम्बन्धेत्यादि। वह्निमान् धूमादित्यादौ द्रव्यत्वस्य समवायसम्बन्धेन प्रतियोगितानवच्छेदकीभूतस्यापि धूमवन्निष्ठ-संयोगसम्बन्धावच्छिन्नतादृशप्रतियोगितावच्छेदकत्वमित्याद्युन्नेयम्, यत्सम्बन्धेनेत्यादि, तथाच धूमाधिकरणीयसमवायसम्बन्धावच्छि-न्नाभावप्रतियोगित्वं तत्र नास्तीतिभावः। तदिति उपाधित्व-मित्यर्थः।

तथाचेति इत्थमन्योन्याभावमादाय नातिप्रसङ्गगन्धोऽपि स चेति अस्वरस इत्यर्थः। व्यधिकरणेति। तेन सम्बन्धेन प्रति-योगिनो भ्रमाभावेन ज्ञानस्याभावज्ञानप्रतिवन्धकतया तादृश-प्रतियोगित्वं तत्राव्याप्तं इति भावः। स्वाभावज्ञानप्रतिवन्धकज्ञान-विषयत्वम् इत्यत्र गौरवमाविष्कुर्व्वन्नाह, स्वाभावेत्यादि। सम्बन्धि-

स्वाभावेत्यादौ षष्ठ्यर्थप्रतियोगितायाः प्रवेशात् । तत्र स्वरूपसम्बन्धस्य शरणीकरणीयतया तस्यैवावश्यकत्वेन तथात्वौचित्याच्च अभावत्वप्रतिबन्धकत्वयोः प्रतियोगिताघटितत्वात् तथाविधव्यवहारगोचरस्यापि विना प्रतियोगितां निर्व्वक्तुमशक्यत्वाच्च । यत्साध्यस्य यत्समानाधिकरणसाध्यस्य ॥ ५ ॥

---

त्वमपेक्ष्य लाघवादाह, स्वाभावज्ञानेति । उभयत्र प्रतियोगिनिष्ठत्वं आसादयितुं विशेष्यानुसरणं, लाघवमिति पूर्व्वलक्षणे एतदुभयाप्रवेशात् न वैयर्थ्यमिति हृदयं, स्वाभावकत्वं पुनरितोऽपि लघुतरमिति ध्येयम् । नन्वेतदेवास्तु प्रतियोगित्वमित्यत एतदपि दूषयति, स्वाभावेत्यादि । तत्र षष्ठ्यर्थे तथात्वौचित्यात् । ननु सम्बन्धमर्य्यादया प्रविष्टायाः प्रतियोगितायाः प्रवेशे इदं स्वलक्षणमविरुद्धमेव इत्यत आह, अभावत्वेति । स्वप्रतियोगिकपदार्थत्वमभावत्वमिति प्रतियोगित्वस्य प्रकारतयैव प्रवेशे आत्माश्रय इति भावः । ननु द्रव्यादिषट्कभिन्नत्वम् अभावत्वं विलक्षणप्रतीत्यनुरोधेन अखण्डोपाधिर्व्वा तत्, इत्यतः प्रतिबन्धकत्वानुसरणम् । ननु तादृशव्यवहारविषयत्वमेव तद्वक्तव्यमित्यत आह, तथाविधेति । अभावत्वादिप्रकारकेत्यर्थः । यत्साध्यस्येति अत्र मूले तुल्याधिकरणतायां व्याप्तेर्हेतुनिष्ठत्वम् असम्भवि इत्यतो वैयधिकरण्यं प्रदर्शयति, यत्समानाधिकरणेति ॥ ५ ॥

तथाहि साधनस्य वह्नेरव्यापकं यावदार्द्रेन्धनं तत्प्रत्येकमव्यापकं साध्यधूमस्य, द्वितीये साध्यधूमस्य व्यापकमार्द्रेन्धनं तत् व्यापकं महानसीयवह्नेः। नापि साध्यं यावदव्यभिचारि तदव्यभिचारित्वमनौपाधिकत्वं साध्याव्यभिचारित्वस्यैव गमकत्वसम्भवात् तच्च दूषितम् ॥ ६ ॥

---

तथाहीत्यादि। यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यावत्साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकम्। साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यावत् यत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं तत्त्वमित्यर्थे तु नोक्तदोष इति ध्येयम्। प्रतियोगितयोश्चैकसम्बन्धावच्छिन्नत्वं विशेषणताविशेषावच्छिन्नत्वं वा वक्तव्यम्। तेन प्रतियोगितावच्छेदकमात्रस्यैव यत्किञ्चित्सम्बन्धा-

---

तथाहीत्यादीति। धूमवान् वह्नेरित्यत्र तादृशप्रतियोगितावच्छेदकस्य गोत्वस्य साध्यसमानाधिकरणात्यन्तभावप्रतियोगितावच्छेदकत्वमित्यतो यावदिति। एवम् उत्तरत्रापि वाच्यत्वमादाय बोध्यम्। नोक्तदोष इति मूलोक्तदोष इत्यर्थः।

एकसम्बन्धावच्छिन्नत्वस्य अननुगमात् आह, विशेषणतेति।

वच्छिन्नसाध्यसमानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकत्वेऽपि एकसम्बन्धावच्छिन्नसाध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकस्य सम्बन्धान्तरावच्छिन्नसाधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि च न क्षतिः। व्यभिचारिणि तु यत्राधिकरणे व्यभिचारो विशेषणताविशेषावच्छिन्नतन्निष्ठाभावप्रतियोगितावच्छेदकं साध्यवत्त्वप्रकारकप्रमाविषयत्वम्। विशेषणताविशेषावच्छिन्नसाध्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति नातिप्रसङ्गः। वस्तुतो हेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यावद्यद्धर्म्मावच्छिन्नसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं तद्धर्म्मावच्छिन्नसामानाधि-

---

प्रतियोगितावच्छेदकमात्रस्येति अत्र मात्रपदं कृत्स्नार्थकं, तथाच हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं सुतरामेव तथेति भावः। प्रतियोगितावच्छेदकत्वेऽपि इति पर्य्यन्तं प्रथमलक्षणस्य यथोक्तविवक्षाव्यतिरेकेनातिव्याप्तिप्रदर्शकं, द्वितीयस्य तु न। व्यतिरेकेनाव्याप्तिं प्रदर्शयति, एकसम्बन्धेत्यादि। अन्यत् सुगमम्।

सम्बन्धविशेषस्य प्रवेशे गौरवादाह, वस्तुत इति। यद्धर्म्माव-

नापि कार्त्स्न्येन सम्बन्धो व्याप्तिः एकव्यक्तिके तदभावात्। नानाव्यक्तिकेऽपि सकलधूमसम्बन्धस्य प्रत्येकवृत्त्यभावात्। अतएव न कार्त्स्न्येन साध्येन सम्बन्धो व्याप्तिः विषमव्याप्तौ तदभावाच्च ॥ ७ ॥

---

करणम्। साध्यसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकं यावत् स्वसमानाधिकरणान्यान्याभावप्रतियोगितानवच्छेदकं तत्त्वं वा व्याप्तिरिति ध्येयम्। साध्यमिति यावतां तेषामित्यर्थः। दूषितं केवलान्वयिन्यव्याप्त्या, सा च यथोक्तलक्षणेऽपि गौरवं परमतिरिच्यते इति ॥ ६ ॥

कार्त्स्न्यं साधनस्य साध्यस्य साध्याश्रयस्य साध्य-

---

च्छिन्नेति साध्यतावच्छेदकावच्छिन्नेत्यर्थः, तेन सद्धेतौ हेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकानां महानसव्यक्त्यादीनां तत्साध्यसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वेऽपि न क्षतिः। एवम् उत्तरत्रापि बोध्यम्। तुल्याधिकरणत्वभ्रमं निराकर्त्तुमाह, यावतामिति। दूषितमिति मूलस्य हेतुं पूरयति, केवलेति। ननु साध्याव्यभिचारित्वस्य तत्त्वे केवलान्वयिन्यव्याप्तिरेव दोष इति, यथोक्तमेव सम्यक् इत्यत आह, सा चेति ॥ ६ ॥

मूलोक्तदोषान् योजयितुं मूलन्यूनतामुद्धर्त्तुञ्च लीलावत्युक्त-

समानाधिकरणस्य साधनाश्रयस्य साधनसमानाधिकरस्य वा आद्ये कृत्स्नसाधनसामानाधिकरण्यं साध्ये कृत्स्नेषु साधनेषु साध्यसामानाधिकरण्यं वार्थः।

प्रथमे एकेति नानेति च व्याप्तेश्चाहेतुवृत्तित्वम्। पृथिवी पृथिवीत्वव्यापकजातेरित्यादावतिव्याप्तिश्च अतएव नेतरः।

अर्थाभिधानपूर्व्वकं द्वितीयं निरस्यति, अत-

---

मूलोक्तलक्षणं विकल्पयिति, कार्त्स्न्यमित्यादिना। साध्याश्रयस्य इत्यादिद्वयञ्च पुनरुक्ततोद्धरणाय सकलधूमस्येत्यादिग्रन्थदर्शनात् व्याप्तेः साध्यनिष्ठत्वमाविष्कर्त्तुं प्रथममेव विकल्पयति, आद्य इति।

स्वातन्त्र्येण दूषणमाह, व्याप्तेरिति। पृथिवीत्यादिपृथिवीत्वव्यापकानां गन्धादीनां यावतामधिकरणम् एकं न सम्भवीति जातिपर्य्यन्तम् अत्रापि जातित्वेन व्यापकानां यावज्जातीनाम् अधिकरणं तथेति तत्त्वेन व्यापकत्वं बोध्यं, न च तथापि तेन तेन व्यापकत्वं निरुच्य साधारणं व्यापकत्वमेव हेतुरस्तु, एकसम्बन्धेन हेतुत्वलाभाय तत्पदोपादानात्। अतएवेति। एकव्यक्तिसाध्यकाव्याप्तेः पृथिवीत्वादावतिव्याप्तेश्चेत्यर्थः। नानेत्यादेर्व्याप्तेश्चेत्यादेश्च दोषस्य अस्मिन् कल्पेऽसम्भवात्, इतरः प्रथमकल्पीयद्वितीयः, ननु विकल्पक्रमादेव साध्येनेत्यादिमूलोक्तं तत् सार्थक-

एवेति। अतएव एकव्यक्तिसाध्यकाव्याप्तेरेव, विषमव्याप्ते समव्याप्तेऽपि च संख्यापरिमाणादावेकत्र साधने सकलसाध्यसम्बन्धस्याभावात्, भावाच्च शब्दवान् द्रव्यत्वादित्यादौ। तृतीये साध्याश्रययावद्वृत्तित्वं चतुर्थे साध्यसमानाधिकरणयावत्सामानाधिकरण्यमर्थः। तत्र च यथासम्भवमेकमात्र वृत्तिसाध्यके वह्न्यादौ साध्ये धूमादावव्याप्तिरतिव्याप्तिश्च सत्त्वादौ॥ ७॥

---

यति, अर्थाभिधानेति। एकव्यक्तिकसाध्यकाव्याप्तेरेव इत्येवकारेण नाना इत्यादिव्यवच्छेदः। विषमव्याप्ते इति। अयोगोलकीयवह्निसामानाधिकरण्यस्य धूमे अभावात् इत्यर्थः। समव्याप्तेऽपि दूषणमाविष्कर्त्तुं न्यूनतां परिहरति, समव्याप्तेऽपि चेति। एकाधिकरणीयनानाव्यक्तिसाध्यकसमव्याप्तहेतौ यावत्साध्यसामानाधिकरण्यस्य च हेतौ सत्त्वात् आह, संख्यापरिमाणादावित्यादि। भावाच्चेति। सकलसाध्यसम्बन्धस्येत्यनेनान्वितम्। तृतीयचतुर्थयोः स्वोक्तयोर्दूषणं स्वयमेव पूरयति, तृतीय इति। यथासम्भवमिति। एकमात्रवृत्तिसाध्यके, साध्यसामानाधिकरण्यवज्ज्वलप्रसिद्ध्या चतुर्थदूषणासम्भवः, वह्न्यादौ तूभयोरेवाप्रसिद्धिः। न च साध्याश्रययावद्वृत्तित्वं यद्धर्मावच्छिन्नस्येति वाच्यम्। यावद्द्रव्येषु गुणवत्त्वस्य सत्त्वात्, यावदित्यंशे सार्थकमेव, चतुर्थे प्रत्येकपददानादेव नाव्याप्तिरित्यत आह, सत्त्वादाविति॥ ७॥

न च यावत्साधनाश्रयाश्रितसाध्यसम्बन्धः साधनाश्रये महानसादौ सकले प्रत्येकं वह्नेराश्रितत्वाभावात्। नापि साधनसमानाधिकरणयावद्धर्म्मसमानाधिकरणसाध्यसामानाधिकरण्यं यावद्धर्म्मसामानाधिकरण्यं हि यावद्धर्म्माधिकरणाधिकरणत्वं तच्चाप्रसिद्धं साधनसमानाधिकरणसकलमहानसत्वाद्यधिकरणाप्रतीतेः। नापि स्वाभाविकः सम्बन्धो व्याप्तिः स्वभावजन्यत्वे तदाश्रितत्वादौ वा व्याप्त्यतिव्याप्तेः ॥ ८ ॥

---

अर्थपरिष्कारपूर्व्वकं पञ्चमं निरस्यति, न चेति। एकमात्रवृत्तिसाधने चाव्याप्तिश्च तथैव षष्ठं निरस्यति, नापीति। तादृशानां सर्व्वेषां महानसत्वादीनां प्रत्येकनिरूपितान्यपि सामानाधिकरण्यानि न कुत्रापि वह्नौ। अथ यद्धर्म्मावच्छिन्नसामानाधिकरण्यत्वेन साधनसामानाधिकरण्यव्यापकत्वं तद्धर्म्मावलीढसामानाधिकरण्यं

---

कार्त्स्न्येन सम्बन्ध इत्यस्य लक्षणस्य यावत्साधनाश्रयाश्रितेत्यादि मूललिखनस्वार्थकत्वात् प्राह, अर्थपरिष्कारेति। अर्थपरिष्कारपूर्व्वकमित्यर्थः। न्यूनतापरिहाराय स्वयं विवक्षित्वापि दूषयति, तादृशेति। यद्धर्म्मावच्छिन्नेति। साध्यतावच्छेदकावच्छिन्नेत्यर्थः, तेन गुणकर्म्मान्यत्वसत्त्वावान् जातिमत्त्वात् इत्यादौ गुणत्व-

नाप्यविनाभावः केवलान्वयिन्यभावात्। अथ सम्बन्धमात्रं व्याप्तिः, व्यभिचारिसम्बन्धस्यापि केनचित् सहव्याप्तित्वात्, धूमादिव्याप्तिस्तु विशिष्यैव निर्वक्तव्येति, तन्न लिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्तावे लक्षणाभिधानस्यार्थान्तरत्वात्। न च सम्बन्धमात्रं तथा तद्बोधादनुमित्यनुत्पत्तेः।

---

विवक्षितमिति चेत् इतोऽपि लघुतया साधनव्यापकतावच्छेदकरूपावच्छिन्नसामानाधिकरण्यमेव व्याप्तिरिति सिद्धान्तयिष्यते॥ ८॥

अविनेति। साध्यं विना साध्याभाववति यो भावो वृत्तिस्तद्विरहः, साध्यं विना अभावः साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति वा।

---

निष्ठसाध्यसामानाधिकरण्यस्य हेतुसामानाधिकरण्याव्यापकत्वेऽपि न क्षतिः, साध्याभाववद्वृत्तित्वविरहस्य पूर्व्वोक्ताव्यभिचारित्वेनाभिन्नतया नञ्प्रश्लेषेण अन्यं व्याचष्टे॥८॥

साध्यं विनेति। विनेति सप्तम्यन्तमव्ययम्। सप्तम्या चावच्छेदकत्वं तच्चानतिरिक्तवृत्तित्वं, तथाच साध्याभावो यदभावानतिरिक्तवृत्तिरिति लभ्यते, अविनेत्यस्य नञा पुनस्तस्याभावः प्रत्याय्यते इदमेव प्रदर्शयति, साध्याभावेत्यादि।

नापि व्याप्तपदप्रवृत्तिनिमित्तमिदं सम्बन्धज्ञानेऽपि व्याप्तिपदाप्रयोगात्। केवलान्वयिनि केवलान्वयिधर्म्मसम्बन्धो व्यतिरेकिणि साध्यवदन्यावृत्तित्वं व्याप्तिः एतयोरनुमितिविशेषजनकत्वं अनुमितिमात्रे पक्षधर्म्मतैव प्रयोजिका। न चातिप्रसङ्गः विशेषसामग्रीसहि-

---

अथेति। सम्बन्धः सामानाधिकरण्यं व्यभिचारिसम्बन्धस्य केनचित्किञ्चिद्रूपावच्छिन्नेन धूमादेरपि द्रव्यत्वादिना वह्निव्यापकत्वात्। तद्बोधादिति। न च व्यभिचाराग्रहसहकृतस्तद्बोधस्तथा व्यभिचारतद्व्यतिरेकयोः अनुपस्थितावपि समानाधिकरणधर्म्मवत्ताज्ञानमात्रादनुमित्यनुत्पादस्य सर्व्वानुभवसिद्धत्वात् हेत्वन्तरे तत्रैव च रूपान्तरेण व्यभिचारग्रहे हेतुतावच्छे-

---

केनचिदिति। मूलस्य व्याख्यानं किञ्चिद्रूपेति, तथाच किञ्चिद्रूपावच्छिन्नेन साध्येन सहाव्यभिचारिसम्बन्धस्य व्याप्तित्वादित्यर्थः। एतदेव द्रढ़यति, धूमादेरिति। अन्वयव्यभिचारस्य कस्यचित् प्रतिबन्धकत्वेनाप्युपपत्तेर्व्यतिरेकव्यभिचारमाह, तत्रैवेति। ननु प्रकृतहेतुतावच्छेदकप्रकारेण व्यभिचाराग्रहो वक्तव्य इत्यत आह, हेत्वन्तरेऽपीति। वह्निमान् धूमादित्यादौ आलोके व्यभिचारग्रहेऽपि अनुमितिरित्यर्थः। ननु तद्धेतुव्यभिचारग्रहाभावो वक्तव्य इत्यत आह,

तायाः एव सामान्यसामग्र्याः कार्य्यजनकत्वनियमा-
दिति केचित्, तदपि न, साध्यवदन्यावृत्तित्वस्य धूमे-
ऽसत्त्वात् वह्निमत्पर्व्वतान्यस्मिन् धूमसत्त्वात्। न च
सकलसाध्यवदन्यावृत्तित्वं वह्निमतां प्रत्येकं तथात्वात्,
सर्व्वत्र लक्षणे साध्यत्वसाधनत्वतदभिमतत्वानां व्याप्ति-
निरूप्यत्वेनात्माश्रयः, साध्यत्वं हि न सिद्धिकर्म्मत्वं

---

दकाग्रहेऽप्यनुमित्युत्पादाच्च, विवदन्ते च सामानाधि-
करण्यज्ञानस्यैव हेतुतायां, व्यभिचारज्ञानाभावकारण-
त्वमपेक्ष्य कारणीभूतसामानाधिकरण्यज्ञाने लाघवेना-
व्यभिचारस्य विषयतयावच्छेदकत्वमुचितं, न च व्यभि-
चारसंशयेऽनुमित्यनुत्पादादव्यभिचारनिश्चयत्वेन कार-
णत्वोक्तौ गौरवं, व्यभिचारज्ञानस्य हि भ्रमत्वनिश्चय-
दशायामेवाविरोधितया भ्रमत्वेनानिश्चीयमानस्य विरो-

---

हेतुतावच्छेदकेति। अयं वह्न्यभाववदवृत्तिमान् इत्यादावित्यर्थः,
विवदन्ते चेति। व्यापकत्ववादिप्रभृतयः अव्यभिचारग्रहस्यैव हेतुत्वं
मन्यमाना इति शेषः। ननु प्रकृतहेतुतावच्छेदकेन यत्र न व्यभि-
चारग्रहः प्रसिद्धो भवति तत्र तदभावः कारणम्, अन्यत्र सामाना-
धिकरण्यज्ञानमात्रमित्यतो दोषान्तरमाह, व्यभिचारेति। उचित-
मिति। व्यभिचारज्ञानाभावस्य कारणतायां स्वतन्त्रज्ञानप्रवेशा-

सिषाधयिषाविषयत्वं वा महानसीयवह्नौ तदभावात्। न च सामान्यतो व्याप्त्यवगमोऽस्त्येव परस्य, कथमन्यथा दूषणेनासाधकतां साधयेदिति वाच्यं स्वार्थानुमानोपयोगिव्याप्तिस्वरूपनिरूपणं विना कथायामप्रवेशादिति ॥ ८ ॥

इति गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानखण्डे व्याप्तिवादे पूर्व्वपक्षः समाप्तः।

---

धित्वं वाच्यम् अव्यभिचारनिश्चयस्य च भ्रमत्वशङ्कायामप्यनुमित्यजनकतया भ्रमत्वेनाग्रह्यमाणस्यैव, हेतुत्वमिति तवैव गौरवात् नानाविधव्यभिचारज्ञानाभावानां

---

लाघवेन सामानाधिकरण्यज्ञान एव विषयतया व्यभिचारोऽवच्छेदक इति भावः। न वेत्यादि, अस्माकन्तु व्यभिचारज्ञानाभावत्वेनैव कारणत्वमिति हृदयम्। व्यभिचारज्ञानस्येत्यादि अयमाशयः, भवतामव्यभिचारवद्विशेष्यकव्यभिचारप्रकारकत्वं व्यभिचारज्ञानस्य भ्रमत्वम्, एकधर्म्मिणि च तदभावाप्रकारकताद्दृशप्रकारकत्वं तद्भ्रमत्वस्य निश्चयत्वं तदविषयीभूतव्यभिचारज्ञानाभावत्वेन हेतुत्वमिति भ्रमत्वनिश्चयविषयनिश्चययोर्महातारतम्यमिति।

तवैवेति। ननु तज्ज्ञानमात्रवृत्तिनानाधर्म्मप्रकारक एवाप्रामाण्यग्रहः सम्भवति, तस्य च तावज्ज्ञानानास्कन्दितत्वमेव

नियतपूर्व्ववर्त्तित्वेन क्लृप्तानामपि हेतुत्वमपेक्ष्य वक्ष्यमाणैकविधाव्यभिचारज्ञानस्यैव हेतुत्वं युक्तमित्यप्याहुः। सामानाधिकरण्यविशिष्टपक्षधर्म्मत्वं तु पक्षे साध्यग्रहं विना दुर्ग्रहमिति केवलान्वयित्वस्याग्रहे सामानाधिकरण्यमात्रग्रहादनुमित्यनुत्पत्तेस्तद्ग्रहोऽपि वाच्यः, तच्च वृत्तिमदत्यन्ताभावाप्रतियोगित्वादिकमन्योन्याभावप्रतियोगितानवच्छेदकत्वं वा, तथाच सर्व्वसाधारण्याय लाघवात्साधनवतस्तद्वृत्तित्वस्य वा वृत्तेरन्योन्याभावस्य

---

वक्तव्यम्, इत्यच्च तत्तदारक्तिविश्रान्तत्वे क्व लाघवम्। एवं यत्र विषयविशेषे व्यभिचारभ्रमत्वनिर्णय एव न जातस्तत्र तस्य हेतुतापत्तिरित्यतो दोषान्तरमाह, नानाविधेति। आहुरिति। अस्वरसः तथाच यादृशाव्यभिचारज्ञानस्य कारणत्वं तादृशव्यभिचारज्ञानाभावस्य हेतुत्वं व्यक्तव्यम्। ननु अव्यभिचारग्रहस्य प्रयोजनं पक्षे साध्याविच्छेदः, तच्च सामानाधिकरण्यस्य विशेषणत्वपरतयैव भविष्यतीत्याशयेन तद्दूषयति, सामानाधिकरण्येति। ये तु केवलान्वय्यनुमितौ अव्यभिचारस्यलाभिषिक्तं केवलान्वयित्वमिति वदन्ति, तन्मतापेक्षयापि स्वमते लाघवं प्रकटयति, केवलान्वयित्वस्येति। वक्ष्यमाणार्थकवृत्तिमत्त्वघटितापेक्षया लाघवादाह, अन्योन्याभावेति। साधनवत इति वृत्तेर्विशेषणं, तद्वृत्तित्वस्य साधनवद्वृत्तित्वस्य, इदन्त्वन्योन्याभावविशेषणतया तथाच वृत्तिमदत्यन्ताभाव

वा विशेषणत्वमुचितमिति सिद्धान्तरहस्यं, शेषं केवला-
न्वयिखण्डने वक्ष्यामः ॥ ९ ॥

इति रघुनाथशिरोमणिप्रणीतायामनुमानदीधितौ
व्याप्तिवादे पूर्व्वपक्षः समाप्तः ।

---

इत्यत्र साधनवद्वृत्तिमदत्यन्ताभावाप्रतियोगित्वमेवोभयसाधारण-
मस्तु एवं साधनवद्वृत्तित्वस्यान्योन्याभावविशेषणतायां साधनवद्वृत्त्य-
न्योन्याभावप्रतियोगितानवच्छेदकत्वमप्युभयसाधारणमिति । शेष-
मिति। इतोऽपि लाघवेन साध्यवदन्यावृत्तित्वादिज्ञानमेवानुमिति
कारणम् इत्यादिकमिति ॥ ९ ॥

इति महामहोपाध्यायकृष्णदाससार्व्वभौमप्रणीतायां
अनुमानदीधितिप्रसारिण्यां व्याप्तिवादे
पूर्व्वपक्षः: समाप्तः ।

## अथ सिद्धान्तलक्षणम् ।

तत्त्वचिन्तामणिः ।

अत्रोच्यते । प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः ।

---

## अथ सिद्धान्तलक्षणम् ।

दीधितिः ।

प्रतियोग्यसमानाधिकरणेति । प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्म्मस्तद्धर्म्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्म्मावच्छि-

---

## अथ सिद्धान्तलक्षणम् ।

प्रसारिणी ।

तद्धर्म्मावच्छिन्नेति । इदं पृथिवीवृत्तित्वविशिष्टद्रव्यत्ववत् गन्धवत्त्वात् इत्यत्र तादृशप्रतियोगितानवच्छेदकविशिष्टद्रव्यत्वत्वाश्रयसामानाधिकरण्यं गुणावच्छेदेनापि इत्यवच्छिन्नपर्य्यन्तं तदुपहितार्थकम् ।

वह्निमान् धूमादित्यत्र द्रव्यत्वेन रूपेण धूमादेर्व्याप्यत्ववारणाय आह, तद्रूपविशिष्टस्येति । तत्रैव तत्तद्वह्नित्वावच्छिन्नत्वे व्यापकत्ववारणाय आह, तद्धर्म्मावच्छिन्नेति । व्याप्तेः सामा-

न्नयावन्निरूपिता व्याप्तिरित्यर्थः दण्डादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिः । इत्थञ्च इदं द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वादित्यादौ सत्त्वाद्यधिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेर्नाव्याप्तिः, साधनस्य

न्यरूपतालाभाय यावदिति । ननु दण्डिमान् दण्डिसंयोगात् इत्यत्र, तत्तद्दण्डस्य साध्यतावच्छेदकस्य, तादृशप्रतियोगितानवच्छेदकत्वं दुर्घटं चालनीन्यायेन तत्तद्दण्डावच्छिन्नाभावस्य दण्डान्तराधिकरणवृत्तित्वादित्यत आह, दण्डादाविति । परम्परेति । ननु दण्डत्वस्य तादृशप्रतियोगितानवच्छेदकत्वे अनुमितिव्यापकतावच्छेदकप्रकारकत्वनियमात् साध्यांशे दण्डत्ववान् इत्याकारापत्तिः नीलपट इतिवत् । न च दण्डप्रकारकत्वनियामकसत्तात् दण्डीत्येवाकार इति वाच्यं, तथाप्यांशिकत्वस्य (१) तस्य दुर्व्वारत्वापत्तेरिति चेन्न परम्परासम्बद्धमित्यत्रापि हि परम्परासम्बन्धो वस्तुविशेषणं, न त्वनुमितौ, तादृशपरम्परायाः सम्बन्धत्वं, तथैवानुभवात्, अन्यथा दण्डेतरवत्यपि स्थले दण्डेतराभावसत्तात् दण्डी नास्ति इति बुद्ध्यापत्तेः, तथाच तावत् प्रकारता परम्परयैव दण्डत्वस्य तथावच्छेदकत्वं वाच्यं तदिहापि समानमिति । न च दण्डस्य तत्तद्दण्डत्वेनावच्छेदकत्वमिति वाच्यं, विशेषलक्षणोक्तप्रगल्भमतेऽतिप्रसङ्गादिति अतएवाह, परम्परासम्बद्धमिति । न तु

(१) एकस्या अनुमितेर्द्दण्डत्ववत्त्वान् दण्डिमानित्युभयाकारकत्वस्येत्यर्थः ।

विशिष्टसत्त्वादेर्गुणादावव्रत्तेः, सामानाधिकरण्यव्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्याधिकरणतावच्छेदकस्य चैक्याद्व्याप्तेरैक्यं वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवह्नि-सामानाधिकरण्यस्य रासभादिसाधारणत्वाद्धूमत्वादि-

---

संयोगसम्बन्धेनेति, फलबलेन तथैव कल्पनादिति, एवं दण्डि साध्यक-व्यभिचारिण्यपि बोध्यः। केचित्तु साध्यादिभेदेन व्याप्तिभेदादत्राव-च्छेदकतानवच्छेदकमेव वक्तव्यं, तथाच तादृशरूपावच्छिन्नावच्छेद-कमेव प्रकृतानुमितौ भासत इति आहुः। यद्रूपविशिष्टस्य फलमाह, इत्यन्वेति। साधनस्य इत्यादि, यद्यपि, विशिष्टसत्त्वमपि सत्त्वमेव तच्च गुणवृत्त्येव, तथापि गुणे न विशिष्टसत्ता किन्तु द्रव्ये इति प्रतीत्या तस्यैवाधिकरणत्वकल्पनमिति भावः। ऐक्यमिति, एकैव हि सा व्याप्तिः, सर्व्वधूमसाधारणी इत्यादिग्रन्थस्तु भङ्ग्या योजनीयः इति रासभादीति, न च तद्रूपविशिष्टस्येत्यादिविवक्षणादेव रासभेऽपि तत्सत्त्वे न क्षतिरिति वाच्यं, वह्निनिरूपितधूमव्याप्तेरनतिरिक्तवृत्ते-रेव निर्वक्तव्यत्वादिति, अन्यथा सामानाधिकरण्यमात्रस्यैव वह्नि-धूमव्याप्तिरित्यस्यापि सुवचत्वादिति, तद्वतीति सामानाधिकरण्य-वतीत्यर्थः।

अस्मिन् कल्पे धूमत्वस्यावच्छेदकत्वमुपहितानुपहितभेदेन समर्थनीयमिति न च धूमत्वस्य व्याप्तिरूपत्वे व्याप्यधूमवानित्यस्य तादृशधूमत्ववद्धूमवानित्याकारापत्तिः, प्रत्यक्षे इष्टत्वादेव, शाब्दे तु सामानाधिकरण्यपर्य्यवसन्नस्यैव व्याप्तिपदार्थत्वात्।

मति तादृशसमानाधिकरण्यं तद्वति धूमत्वादिकं वा व्याप्तिः, आद्या भिन्ना, द्वितीया त्वभिन्नैवेति ध्येयम् ॥ १० ॥

अयं कपिसंयोगी एतद्वृक्षत्वादित्यादिसंग्रहायासमानाधिकरणान्तम् । यत्तु इदं संयोगिद्रव्यत्वादित्यत्राव्याप्तिवारणाय तत्, संयोगस्य शाखाद्यवच्छेदेन वृत्तेर्वृक्षत्वावच्छेदेन तत्सामान्याभाववत्त्वाविरोधात्, तत्र

---

न च हेतुतावच्छेदकविशिष्टहेतौ तादृशसामानाधिकरण्यमित्युक्तावेव विनिगमनाविरहः, तथाच हेतुनिष्ठसामानाधिकरण्यमित्येव वाच्यम्, इदं द्रव्यं पृथिवीवृत्तित्वविशिष्टसत्त्वादित्यत्र जलावच्छिन्नद्रव्यत्वनिरूपितसत्त्वासामानाधिकरण्यस्यापि प्रकृतहेतुव्याप्तित्वापत्तेः । अथेष्टापत्तिः, तर्हि रासभनिष्ठसामानाधिकरण्यमेव किमिति वाधितम् । इत्थञ्च प्रागुपदर्शिततद्धर्मावच्छिन्नेनेत्यत्रावच्छिन्नत्वं वैशिष्ट्यमेव, उपदर्शितव्याप्तेरनेनैव सिद्धत्वादिति । अभिन्नैवेति तथाच ग्रन्थसम्मुखतयैव गतिः इति भावः ॥ १० ॥

प्रगल्भीयं दर्शयति, यत्त्विति । तत् असमानाधिकरणान्तम् । तत्र चेति, तथाच संयोगत्वावच्छिन्नाभावो न योग्य इति भावः ।(१) नन्वयं महारजनसंयोगी एतत्त्वादित्यत्र महारजनसंयोगाभावस्य योग्यत्वात्; तस्मिन् महारजनसंयोगो नास्तीति बुद्धेर्दुर्वारत्वा-

---

(१) योग्यमात्रप्रतियोगिकत्वस्यैवाभावयोग्यत्वप्रयोजकत्वात् ।

चातीन्द्रियस्य संयोगस्य सत्त्वात्परितः प्रतियोग्युपलब्धे-र्दोषाद्वा वृक्षे न संयोग इत्यादिनाध्यक्षमिति तन्न, द्रव्ये संयोगसामान्याभावे मानाभावात्। न च यो यदीय-यावद्विशेषाभाववान्, स तत्सामान्याभाववानिति व्याप्ति-र्यावत्संयोगाभावा एव मानं, यत्तदर्थयोरननुगमात्, एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपाधित्वाच्च। एतेन अयं संयोगसामान्याभाववान् संयोगयावद्विशेषाभाव-वत्त्वादिति निरस्तं, व्यर्थविशेषणत्वादप्रयोजकत्वान्नि-र्गुणत्वादेरुपाधित्वाच्च। न च प्रतियोग्यनवच्छेदक-तयैव वृक्षत्वादेरभावावच्छेदकत्वं, गुणाद्यनवच्छेदकप्रमे-यत्वादेस्तदभावावच्छेदकत्वप्रसङ्गात्। यथा च घटपूर्व-वर्त्तित्वस्य प्रतिदण्डं, वह्निसामानाधिकरण्यस्य वा

---

दित्यत आह, परितः प्रतियोग्युपलब्धेरिति। प्राचीनमते यत्तदर्थ-योरनुगमादाह, एकावच्छेदेनेति। एतेन दर्शितोपाधिना। व्यर्थेति, अभाववत्त्वादित्यस्यैव सम्यक्त्वादित्यर्थः। द्रव्यमात्रस्यैव पक्षत्वा-दन्यत्र च साध्यसत्त्वादिति। ननु तथैव वक्तव्यमित्यत आह, अप्रयोजकत्वादिति। सम्प्रदायमत आह, निर्गुणत्वादेरिति। ननु प्रमेयत्वस्य गुणावच्छेदकत्वेऽपि न क्षतिः, प्रमेयत्वावच्छेदेन गुणो नास्तीति बुद्धेरसत्त्वादित्यत आह यथाचेति, प्रतिदण्ड-मिति भिन्नत्वेनान्वितम्। अत्र कश्चित् आकाशादिसंयोगो व्याप्य-

वृत्तित्वस्यात्यन्तमसम्भावितत्वाच्च। एवं प्रतियोगिमतो-रपि कालदेशयोर्देशकालभेदावच्छेदेन तदभावः, तथाच

---

दिति एकावच्छेदेनैव तदीय-सम्बन्धाभावस्य तदभावनियततया हुताशनाव्याप्यवृत्तित्वस्यापरिहार्य्यत्वादिति भावः।

संयोगस्य वह्निप्रतियोगिकत्वेनाव्याप्यवृत्तित्वेऽपि संयोगत्व-सामान्यरूपेण:तदभावसत्त्वेमानाभानाभावात् शुद्धसंयोगेन वह्नेरपि स्वाधिकरणे नाभाव इति तेन सम्बन्धेनावह्निसाध्यकेऽव्याप्तिः कथम्। सम्भवति इत्यत आह, प्रतियोगिमतोरपीति "देशभेदः" देशविशेषः तन्त्वादिः तदवच्छेदेन काले घटाभावे सति, समयपचके घटसाध्यकेऽव्याप्तिः, कालभेदोऽपि प्रतियोग्यनधिकरणकाल एव, तथाच देशवृत्तितायां सएवावच्छेदकः स्यात् इति, कपाले घटस्य नाशकालावच्छेदेन अभावसत्त्वात्। तत्र तत्साध्यका-व्याप्तिवारणाय च असमानाधिकरणान्तम्। घटवत्यपि काले इदानीं तन्तुषु न घट इति प्रतीतिवत् घटवत्यपि कपाले घटनाश-दशायां इदानीमिह कपाले न घट इति प्रतीतेः, न च तन्तुषु यो घटाभावस्तदवच्छेदकतयैतत्कालमवगाहते इत्यादिरीत्यावक्तव्य-मिति साम्प्रतं, तन्तुषु घटाभावस्य व्याप्यवृत्तितया एतत्कालस्य तदवच्छेदकत्वावगाहने प्रतीतेर्भ्रमत्वापत्तेः। तत्तत्साध्यकेति गुणवत् संयोगवद्वा द्रव्यत्वात्, पर्व्वतो वह्निमान् धूमात्, समयो घटवान्, कपालं घटवत्, एतत्त्वादित्यादावित्यर्थः। नोपादेयञ्चेति स्वाधिकरणवृत्त्यभावाप्रतियोगित्वमेव सर्व्वथाव्याप्यवृत्तित्वमिति

तत्तत्साध्यकाव्याप्तिवारणाय तत्। नोपादेयञ्च सर्व्वथैव व्याप्यवृत्तिसाध्यके साध्यसाधनभेदेन व्याप्तिभेदादिति वदन्ति॥ १२ ॥

प्रतियोग्यसामानाधिकरण्यञ्च प्रतियोगितावच्छेदकावच्छिन्ना सामानाधिकरण्यं तेन अयं गुण-

---

स्वाधिकरणवृत्तितायां सम्बन्धावच्छेद्यत्वानिवेशात् तादृशसाध्यकं नित्यपक्षकज्ञानादिकमेव तथाचायमात्माज्ञानादित्यादावेव नोपादेयं सत्तावान् जातेरित्यादौतूपादेयमेव, तत्र समवायेन सत्ताया अधिकरणे महाकाले कालिकविशेषणतया अभावसत्त्वात्, इत्यावेदयितुं सर्व्वथैवेति। अभावे हेत्वधिकरणवृत्तित्वस्य साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगिमत्ताबुद्धेः प्रतिबन्धकतावच्छेदकीभूतप्रकारताघटकसम्बन्धेन विशेषितत्वे तु, व्याप्यवृत्तिसाध्यके, सर्व्वथैव अर्थात् कुत्रापि लक्षणे न निवेश्यमित्यर्थः, अव्याप्यवृत्तिसाध्यकेतु कपिसंयोगाभाववान् नित्यगुणत्वादित्यादौ क्वचिदेव नोपादेयं प्रयोजनाभावादिति भावः ॥१२॥

गुणकर्म्मान्यत्वविशिष्टसत्त्वस्य सत्तानतिरिक्ततया तादृशसाध्याभावस्य गुणे प्रतियोगिसमानाधिकरणतयातिव्याप्तेराह, प्रतियोगिसामानाधिकरण्यञ्चेति विशिष्टसत्त्वस्य व्याप्यवृत्तित्वेन भूतत्वमूर्त्तत्वोभयेतिसाध्यान्तरमनुसृतं आत्मान्यवृत्तिविशेषगुणवत्त्वरूपभूतत्वस्य, अपकर्षाश्रयपरिमाणवत्त्वरूपमूर्त्तत्वस्यापि स्वाधिकरणे उत्पत्तिकालाद्यवच्छेदेनाभावसत्त्वादव्याप्यवृत्त्येव तदुभयमिति।

कर्म्मान्यत्वविशिष्टसत्तावान् जातेः भूतत्वमूर्त्तत्वोभय-वान् मूर्त्तत्वादित्यादौ नातिव्याप्तिः। न चोभयत्व-मेकविशिष्टापरत्वं विशिष्टञ्च केवलादन्यदिति तद-भावो मनसि सहजत एव प्रतियोगिव्यधिकरण इति वाच्यम्, उभयत्वं हि न विशिष्टत्वादनतिरिक्तं न वा तदवच्छिन्नाभावस्तदवच्छिन्नाभावात् वैशिष्ट्यविरहेऽपि घटत्व-पटत्वयोरुभयत्वस्योभयत्वेन तदभावस्य च प्रत्य-

---

सार्व्वभौममतसिद्धमेकविशिष्टापरत्वमेव चेत् उभयत्वं तदाना-तिव्याप्तिरित्यतिरिक्तमेव तद्व्यवस्थापयति, नचेति। सहजत इति प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशेऽपीत्यर्थः, विशिष्टस्य केव-लमूर्त्तत्वादतिरिक्तत्वादिति भावः। वैशिष्ट्यविरहेऽपि सामाना-धिकरण्यरूपवैशिष्ट्यशून्यत्वेऽपीत्यर्थः, तथाचैकत्र प्रतीतिसिद्धमति-रिक्तं यदुभयत्वं, तदवगाहितयैव अत्रोभयमित्याकारकसर्व्वप्रतीतेः प्रमात्वोपपत्तेरिति भावः। तथाच एकविशिष्टापरत्वावगाहित्वे लाघवमकिञ्चित्करमिति। लक्ष्यतयातिव्याप्तेः परिहारं प्रतिषेधति न च तन्नेति हेतुमत्तावच्छेदेन साध्यतावच्छेदकावच्छिन्नाधिकरण-त्वस्यैव सद्धेतुत्वप्रयोजकतया मूर्त्तत्वरूपं यत्किञ्चित्साध्यसत्त्वम-किञ्चित्करमेव प्रतिभाति। अलक्ष्यत्वनियतं व्यभिचारं ग्राहयति नात्रोभयमिति अत्र मूर्त्तत्वाश्रये मनसि इत्यर्थः।

ननु स्वप्रतियोग्यसामानाधिकरण्याभावादेव साध्यभेदमादाय

त्वसिद्धत्वात्। न च तत्र व्याप्तिरेवोभयत्वाधिकरणस्य मूर्त्तत्वस्य मनसि सत्त्वादिति वाच्यं, तथात्वेऽप्युभयत्वेन रूपेण तत्रासत्त्वात्, नात्रोभयमितिप्रतीतेर्दुर्व्वारत्वात्। अत्यन्तपदञ्चात्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यस्य, अत्यन्ताभावत्वनिरूपकप्रतियोगितायाश्च लाभाय, अन्यथा सर्व्वस्यैवाभावस्य स्वसमानाधिकरणाभावान्तरभिन्नत्वात्तद्भेदस्य स्वस्वरूपानतिरिक्ततया प्रतियोग्यसामानाधिकरण्यस्यैव दुर्ल्लभत्वापत्तेः। सर्व्वेषामेवाभावानां हेतुसमानाधिकरणात्यन्ताभाव-

---

नासम्भव इत्यत्यन्तपदं व्यर्थमित्यत आह, अत्यन्तपदञ्चेति। हेतुसमानाधिकरणगवाद्यभावनिष्ठस्य अभावान्तरभेदस्य अनवस्थाभयेन स्वाधिकरणगवाद्यभावात्मकत्वेन कल्पनीयतया घटाद्यभावरूपतत्प्रतियोगिसामानाधिकरण्येनासम्भवः स्यादितिभावः, अत्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरण्यनिवेशे च गवाद्यभावस्य प्रतियोगी घटाद्यभावो न तन्निष्ठात्यन्ताभावत्वनिरूपक इति तद्व्युदासः। अत्यन्ताभावत्वनिरूपकस्य हेतुसमानाधिकरणाभावप्रतियोगित्वस्यानिवेशे दोषमाह, सर्व्वेषामिति। गोत्वाभाववान् अश्वत्वादित्याद्यभावसाध्यके इत्यादि। सम्प्रदाय इत्यस्वरससूचनाय, तद्बीजन्तु, अत्यन्ताभावत्वनिरूपकत्वनिवेशेऽपि अभावमात्रस्यैव पूर्व्वक्षणवृत्तित्ववैशिष्ट्यावच्छिन्नस्वस्वात्यन्ताभावरूपप्रतियोगिनासामानाधि-

त्वनिरूपकप्रतियोग्यसमानाधिकरणाभावान्तरात्मकस्य स्वभेदस्य प्रतियोगित्वाद्भावसाध्यकाप्रसेश्चेति सम्प्रदायविदः ॥ १३ ॥

अथ यदा गोत्वं तदा गौरित्यत्रातिव्याप्तिः प्रलयस्य गोध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वात् । संसर्गाभावमात्रोक्तावपि यदा स्पन्दस्तदा द्व्यणुकं, यदा अदृष्टं तदा जन्यं ज्ञानं, दुःखं वा, यदा तस्या दृष्टं तदा तदीयं ज्ञानमित्यादावतिव्याप्तिः, द्व्यणुकत्वादेर्द्व्यणुका-

---

करणादभावसाध्यकाव्याप्तेस्तादवस्थ्यात्, यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तादृशप्रतियोगिताया वक्तव्यत्वात्तदर्थमेवात्यन्तपदमिति ॥ १३ ॥

अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वमतमनुसृत्याह, अथ यदा गोत्वमिति । कालो गोमान् गोत्वादित्यादावित्यर्थः ।

मिश्रमतं निराकर्त्तुमाह, संसर्गाभावमात्रोक्तावपीति । लक्षणघटकात्यन्तभावपदेनेत्यादि, यदास्पन्द इति । तथाच द्व्यणुकवान् स्पन्दात्, जन्यज्ञानवान् दुःखवान् वा अदृष्टात्, तदीयज्ञानवान् तदीयादृष्टात्, इत्यादावित्यर्थः । खण्डप्रलयेऽपि स्पन्दस्य अदृष्टस्य च सत्त्वेन तदानीं जन्यज्ञानादेः साध्यस्यासत्वात् व्यभिचारित्वमिति, सर्गान्तरीयद्व्यणुकप्रागभावसत्त्वेन द्व्यणुकसामान्यस्य ध्वंसविरहादिति भावः ।

दिशून्यखण्डप्रलयादिनिष्ठध्वंसप्रागभावप्रतियोगितान-वच्छेदकत्वात्, न हि तयोः सामान्याभावत्ववादिमतेऽपि, एकविशेषप्रागभावविशेषान्तरध्वंसवत्यपि समये, सामान्यावच्छिन्नध्वंसप्रागभावयोः सम्भव इति चेन्न, प्रतियोगिमत इव ध्वंसादिमतोऽपि कालस्यात्यन्ता-भाववत्त्वेऽविरोधात्, अन्यथा अत्यन्ताभावस्य काल-मात्रावृत्तित्वप्रसङ्गात् । इयांस्तु विशेषो यदेकस्य देश-

---

ननु महाप्रलयपूर्व्वत्ततीयक्षणे चरमद्व्यणुकनाशानुगुणस्पन्दस्य सत्त्वेन तदानीमेव द्व्यणुकत्वावच्छिन्नस्य ध्वंसत्वात् तादृशध्वंसरूप-संसर्गाभावमादायैवातिव्याप्तिनिराकरणं स्यादित्यत उक्तं यदादृष्ट-मिति, नित्यज्ञानस्य साध्यान्तर्गतत्वे सद्धेतुत्वमाशङ्क्योक्तं जन्यमिति ज्ञानविशेषणम्। नित्यसुखसाक्षात्कार एव मोक्ष इति वादिनोभट्टस्य मतमनुसृत्याह, दुःखञ्चेति । कार्य्यमात्रं प्रत्यदृष्टस्य हेतुत्वेन यदि महाप्रलयपूर्व्वक्षणेऽपि अदृष्टसत्वमपेक्षितं तदानीं दुःखत्वावच्छिन्न-ध्वंससत्वान्नातिप्रसङ्गः, तदाप्याह, यदा तस्यादृष्टमिति। तथाच सु-षुप्तिकालेऽपि तत्पुरुषीयादृष्टसत्त्वेन तदीयज्ञानासत्वेन च व्यभिचा-रित्वात्, तदानीञ्च जाग्रदवस्थोत्पद्यमानज्ञानव्यक्तीनां प्रागभावस-त्त्वात्, तदीयज्ञानसामान्यसंसर्गाभावस्यासम्भव इति भावः ।

अन्यथेत्यादि। अन्यथा, तदीयध्वंसादिमतः कालस्य तदत्यन्ता-भावानभ्युपगमे,कालमात्रस्येति कस्यचित् कालस्य तत्तत्प्रागभावस्य

भेदावच्छिन्नं तथात्वमपरस्य तु स्वरूपावच्छिन्नमिति देशे कालस्येव कालेऽपि देशस्याप्यवच्छेदकत्वात्, तच्छून्ये च काले तदभावस्य प्रतियोगिव्यधिकरणत्वात्। न च संसर्गाभावविशेषोऽत्यन्ताभावः, संसर्गाभाववत्वञ्च संस-

---

कस्यचिच्च तत्तद्ध्वंसस्य सत्त्वेन इति भावः। यत् एकस्येति प्रतियोगिमतः कालस्य,देशभेदः प्रतियोगिनोऽनधिकरणदेशः,तदवच्छेदेन तथात्वम्,अत्यन्ताभाववत्त्वमिति परेणान्वयः। अपरस्येति। ध्वंसादिमतः कालस्य, स्वरूपावच्छिन्नमिति निरवच्छिन्नमित्यर्थः। ननु गवाद्यभावस्य सृष्टिकाले प्रतियोगिसमानाधिकरणत्वेन कुतो लक्षणघटकतेत्यत आह,तच्छून्ये चेति। तथाच गवादिशून्यप्रलयाववच्छेदेन प्रतियोगिगवादिसामानाधिकरण्याभाववैशिष्ट्यं गवाद्यभावस्य सुलभमिति यत्किञ्चिद्वित्वधिकरणे प्रतियोगिव्यधिकरणत्वस्यैव लक्षणघटकतया च नातिव्याप्तिरिति भावः, संसर्गाभावविशेष इति। सदातनत्वविशिष्टसंसर्गाभाव इत्यर्थः। संसर्गारोपेति। प्रतियोगितावच्छेदकसंसर्गेन यः प्रतियोगिनः "आरोपः"देशोऽयं यदि संयोगेन घटवान् स्यात्तदा घटवत्तयोपलभ्येतेत्येवं प्रसङ्ग इत्यर्थः। प्रागभावध्वंसयोरपि उत्तरकालत्वपूर्व्वकालत्वरूपौ स्वप्रतियोगितावच्छेदकसम्बन्धौ कल्पनीयौ, संसर्गाभावप्रत्यक्षसामान्यं प्रति स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यारोपत्वेनैकरूपेण हेतुतायां लाघवादिति, तादृशारोपजन्यप्रतीतिविषयाभावत्वरूपसंसर्गाभावलक्षणं, तयोर्नाव्याप्तमिति भावः।

र्गारोपजन्यप्रतीतिविषयाभावत्वरूपं, जन्यताघटकनियमघटितमिति वाच्यम् । तद्वदन्यावृत्तित्वरूपनियमस्य तत्र घटकत्वात्, एवं नियमान्तरस्यात्र प्रवेशेऽपि न क्षतिरित्याहुः । वक्ष्यते च नियमाघटितमेव संसर्गाभावादिलक्षणम्, अनुपदमेव च विवेचयिष्यते संसर्गाभावत्वप्रवेशे प्रयोजनविरहोऽव्याप्तिश्च ॥ १४ ॥

---

जन्यताघटकेति । स्वनिष्ठजन्यतायाः स्वकारणव्याप्यत्वरूपाया घटको यो नियमो व्याप्तिः तद्घटितमिति, चक्रकप्रसङ्ग (१) एव लक्षणे दोष इत्याशयः । नियमान्तरस्येति साध्यसम्बन्धितावच्छेदकत्वरूपस्येत्यर्थः । ननूक्तारोपस्याभावलौकिकप्रत्यक्षे हेतुत्वे मानाभावादसम्भवः, अतीन्द्रियसाध्यकाव्याप्तिश्चेत्यत उक्तं, वक्ष्यते चेति। नियमाघटितमिति नियमोव्याप्तिस्तदघटितमित्यर्थः तथाच भेदभिन्नाभावत्वरूपात्यन्ताभावत्वघटितलक्षणे नोक्तदोषाणामवकाश इति सर्व्वं सुस्थम् । प्रयोजनविरह इति साध्यतावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणत्वमभिप्रेत्य । अव्याप्तिश्च समनियताभावानामैक्यमनभ्युपेत्य, एवमभावमात्रप्रतियोगिकाभावस्याभावाधिकरणकस्य चाभावस्य तत्तदधिकरणात्मकत्वेन तादात्म्येन गवादेः साध्यत्वे तत्सम्बन्धावच्छिन्नाभावस्य यतो नात्यन्ताभावरूपतेति तत्त्वम् ॥ १४ ॥

---

(१) चक्रकत्वञ्च स्वज्ञानापेक्ष्य ज्ञानापेक्ष्य ज्ञानापेक्ष्य ज्ञानकत्वरूपम् ।

अथ ज्ञानवान् द्रव्यत्वात्, विशेषगुणवान् मनोऽन्यद्रव्यत्वात्, जातिमान् भावत्वादित्यादौ समवायेन ज्ञानादेः साध्यतायामतिव्याप्तिः, साध्यशून्यानामपि हेतुमतां विषयत्वविशेषणत्वैकार्थसमवायैः' साध्यवत्त्वादिति चेन्नैवं प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो यदधिकरणं, सम्बन्धि वा तद्वृत्तित्वाभावस्योक्तत्वात्, भवति चैवमन्योन्याभावोऽपि प्रतियोग्यसमानाधिकरणः, तद्विशिष्टस्य च हेत्वधिकरणावृत्तित्वं वाच्यं

---

अथेत्यादि। विशेषपदं व्यभिचारित्वरक्षार्थं; मनसः कालोपाधितावद्दिगुपाधिताया अपि अभावात्, तत्रैव प्रतियोगिव्यधिकरणत्वस्य सम्भवान्नातिव्याप्तिरिति मनोन्यपदं, तथाच काले कालिकविशेषणतया, दिशि च दिक्कृतविशेषणतया, प्रतियोगिनो विशेषगुणस्य सत्त्वात् साध्याभावस्य न लक्षणघटकतेति। दिक्कालयोरीश्वरानतिरेकादाह, जातिमानिति। नैवमिति। तादात्म्येन वह्निमतः साध्यत्वे वृत्त्यनियामकेन तेन प्रतियोगिनो अधिकरणत्वाप्रसिद्ध्या असामानाधिकरण्यमपि असिद्धमिति उक्तं तत्सम्बन्धि वेति, एवमिति। सम्बन्धित्वनिवेशे इत्यर्थः। तद्विशिष्टस्येति प्रतियोग्यसामानाधिकरण्यवैशिष्ट्यावच्छेदेन हेत्वधिकरणे वर्त्तमानत्वमित्यर्थः, तेन कपिसंयोगाभावस्य गुणे प्रतियोग्यसामानाधिकरण्येऽपि तमादाय नाव्याप्तिरिति भावः।

तेन नाव्याप्यवृत्तिसाध्यकासंग्रहः, तद्वृत्तिभिन्नत्वन्तु नार्थः, अव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिप्रसङ्गात्।

अत्र सामानाधिकरण्यवतो न तदभाववत्त्वं, प्रतीतेरन्यथैवोपपादितत्वादित्यस्वरसात् प्रतियोगिवैयधिकरण्येत्यादिविशेषणं वक्ष्यति तच्च हेत्वधिकरणे बोध्यं, प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावेति पुनरभावान्तार्थनिष्कर्षः॥ १५॥

---

सामानाधिकरण्यादेर्व्याप्यवृत्तित्वाभिप्रायेणाह, सामानाधिकरण्यवत इति। प्रतीतेरिति गुणे संयोगाभावे न संयोगसामानाधिकरण्यमिति प्रत्ययस्येत्यर्थः, अन्यथेति। संयोगाभावनिष्ठसंयोगसामानाधिकरण्यस्य गुणे अवच्छेदकत्वाभावावगाहित्वेनोपपादितत्वादित्यर्थः। तथाच संयोगीसत्त्वादित्यादौ संयोगाभावस्य द्रव्ये प्रतियोगिसमानाधिकरणस्य धर्त्तुमशक्यत्वात् अभावान्तरमादायातिव्याप्तिरिति भावः, वक्ष्यतीति। विशेषव्याप्तौ उपाध्याय इति शेषः। तच्चेति। प्रतियोगिवैयधिकरण्यमपीत्यर्थः। ननु चिन्तामणौ प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वं चेद्धेत्वधिकरणे प्रतियोगिसामानाधिकरण्यानवच्छेदकावच्छिन्नत्वं तदा सामानाधिकरण्यस्य व्याप्यवृत्तित्वेन अवच्छेदकत्वाप्रसिद्धा तदनवच्छेदकावच्छिन्नत्वमप्यप्रसिद्धमिति तत्तात्पर्य्यार्थमाह, प्रतियोग्यनधिकरणीभूतेति॥ १५॥

ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्तत्सामान्यस्य प्रतियोगितावच्छेदकयत्किञ्चिदवच्छिन्नस्य वा अनधिकरणत्वमुक्तम् आद्ये अव्याप्यवृत्तिसाध्यकाव्याप्तिः, एकप्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणत्वात्। द्वितीये, संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वादित्यादावतिव्याप्तिः, साध्याभाववतो द्रव्यस्य तत्प्रतियोगिसंयोगविशेषाभाववत्त्वात्, नित्यत्वादिविशिष्टद्रव्यत्वाभावात्मकतत्प्रतियोगिनोऽधिकरणत्वाच्च, स्वाभावाभावात्मकस्य विशिष्ट-

---

यस्य कस्यचिदिति अनधिकरणत्वमित्यग्रेणान्वयः। आद्ये प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचिदिति कल्पे इत्यर्थः। द्वितीये प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणत्वघटितकल्पे इत्यर्थः। संयोगाभावस्य केवलान्वयित्वमनुसृत्य साध्यान्तरमाह, द्रव्यत्वाभाववान् इति। संयोगाभावसाध्यकेऽतिव्याप्तिं योजयति, साध्याभाववत इति। साध्याभावानां संयोगव्यक्तीनां स्वस्वाभावाभावरूपतया सामान्याभाववद्विशेषाभावानामपि तत्प्रतियोगित्वादिति भावः। अभावाभावस्यैव प्रतियोगित्वमिति सिद्धान्तानुसारी द्रव्यत्वाभावसाध्यकेऽतिव्याप्तिं योजयति, नित्यत्वादिविशिष्टेति। साध्याभावस्य द्रव्यत्वस्य विशिष्टद्रव्यत्वानतिरेकितया तत्सामान्याभाववत् नित्यत्वादिविशिष्टद्रव्यत्वाभावोऽपि तत्प्रति-

स्यापि द्रव्यत्वस्य द्रव्यत्वानतिरेकात् । तृतीये कपिसं-योगाभाववान् आत्मत्वादित्यादावव्याप्तिः, साध्याभावानां कपिसंयोगानां गुणानामधिकरणस्यात्मनस्तत्प्रतियो-गितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरण--

---

योगीति जन्ये द्रव्ये नित्यत्वविशिष्टद्रव्यत्वाभावरूपप्रतियोगिना, नित्ये च जन्यत्वविशिष्टद्रव्यत्वाभावात्मकप्रतियोगिना, समानाधि-करणस्य द्रव्यत्वरूपसाध्याभावस्य धर्त्तुमयोग्यत्वादतिव्याप्तिरिति भावः। तृतीये इति प्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्म्मांव-च्छिन्नस्यानधिकरणत्वविवक्षणे इत्यर्थः। गुणानामित्यभेदाभिधानं गुणसामान्याभावे कपिसंयोगरूपसाध्याभावस्य प्रतियोगित्वव्यक्ती-करणाय, तथाच साध्याभावस्य कपिसंयोगस्य, कपिसंयोगाभा वत्वमिव गुणसामान्याभावत्वमपि प्रतियोगितावच्छेदकीभूतो धर्म्मः, तदवच्छिन्नानधिकरणत्वस्यात्मत्वरूपहेतुमतिसत्वेन स्वप्र-तियोगितावच्छेदकयत्किञ्चिद्धर्म्मावच्छिन्नानधिकरणहेत्वधिकरण--वृत्तिकपिसंयोगरूपाभावप्रतियोगितावच्छेदकमेव संयोगाभावत्व-मित्यव्याप्तिरिति भावः। प्राचां संयोगसामान्याभावस्य द्रव्येऽस-त्वात्, कपीति।

नैवमिति यत्प्रतियोगितेत्यनभिधाय यादृशेत्यभिधानं एकैक-धर्म्मावच्छिन्नप्रतियोगित्वानुगमलाभाय,तेन हेत्वधिकरणे अभावीय-यद्यद्धर्म्मावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं,तत्तद्धर्म्म-भेदकूटो लभ्यते,अन्यथा यत्प्रतियोगितेत्यभिधाने स्वावच्छेदकसंसर्गा-

त्वात्। मैवं यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिक-रणत्वं हेतुमतः तदनवच्छेदकत्वस्योक्तत्वात् ॥ १६ ॥

अत्र च ग्राह्यसामानाधिकरण्ये हेतोर्यादृशः सम्बन्धः प्रविष्टस्तेन सम्बन्धेन यो हेतुमान्, तत्र वर्त्त-मानत्वमभावस्य, साध्यस्य च यादृशः सम्बन्धः प्रविष्ट-स्तत्सम्बन्धावच्छिन्नायाश्च प्रतियोगिताया अनवच्छेदकत्वं बोध्यं, तेन धूमसमवायिनिष्ठाभावस्य संयोगावच्छिन्न-प्रतियोगितायाः, धूमसंयोगिनिष्ठाभावस्य च समवाया-

---

वच्छिन्नस्वावच्छेदकधर्म्मावच्छिन्ननिरूपकताकाधिकरणत्वसम्बन्धा-वच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन हेत्व-धिकरणवृत्तयो या या अभावीयप्रतियोगिताः प्रत्येकं तत्तदवच्छे-दकभेदकूटवत्त्व साध्यतावच्छेदके वाच्यमिति स्वरूपसम्बन्धा-त्मकप्रतियोगितासमसंख्यकभेदकूटनिवेशप्रयुक्तं गौरवं स्यादिति मन्तव्यम् ॥ १६ ॥

हेतुसमानाधिकरणेत्यत्र हेत्वधिकरणत्वं विशिनष्टि, ग्राह्य-सामानाधिकरण्ये इति परामर्शेन ग्राह्यं, पक्षतावच्छेदकधर्म्मेण यत् सामानाधिकरण्यं हेतोस्तत्रेत्यर्थः। प्रतियोगित्वञ्च विशिनष्टि-साध्यस्येति अनुमित्या ग्राह्यं साध्यस्य पक्षतावच्छेदकधर्म्मेण यत्सामानाधिकरण्यं तत्रेत्यर्थः, तथाच येन सम्बन्धेन पक्षवृत्तित्वं हेतोः परामर्शेन गृह्यते तेन सम्बन्धेन हेतोरधिकरणे वर्त्तमाना-

वच्छिन्नप्रतियोगितायाः, अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः। यद्वा साध्यतावच्छेदकसम्बन्धेन प्रतियोग्य-सम्बन्धित्वं हेतुमतो वक्तव्यं, तथाच सम्बन्धभेदेन प्रति-योगिता न विशेषणीया, एवं स्थिते सामानाधिकर-ण्यादौ सम्बन्धित्वं निवेशनीयं न त्वधिकरणत्वं, तथाच धर्म्मिणोऽपि व्याप्यत्वं व्यापकत्वञ्च निर्व्वहति। तथाहि तादात्म्येन सम्बन्धेन धूमवतः सम्बन्धिनि महानसे वर्त्तमानो योऽन्योन्याभावस्तस्य तादात्म्यसम्बन्धावच्छि-

---

भावस्य, येन सम्बन्धेन च साध्यमनुयीयते तत्सम्बन्धावच्छिन्नायाप्रति-योगितायाः, अनवच्छेदकत्वं वाच्यमिति। एतत्कल्पे, प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं प्रतियोगितावच्छेदकसम्बन्धेन च प्रतियोग्यधिकरणत्वमिति द्विधा निवेशे गौरवम्, एवं धनी चै-त्रत्वादित्यादिवृत्त्यनियामकस्वामित्वादिसम्बन्धेन साध्यतायां तत्स-म्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिश्चेत्यतः प्रतियोग्यसम्ब-न्धित्वमेव साध्यतावच्छेदकसम्बन्धेनाह, यद्वेति। एवं स्थिते इति, प्रतियोग्यसामानाधिकरण्यमित्यत्र प्रतियोग्यधिकरणत्वमनिविश्य स्वप्रतियोगिसम्बन्धित्वनिवेशे इत्यर्थः। सामानाधिकरण्यादाविति, हेतौ यत् साध्यसामानाधिकरण्यघटकवृत्तित्वम्, एवमभावे च यत् हेतुसामानाधिकरण्यं तद्घटकं यत् हेत्वधिकरणत्वं तत्र तत्रेत्यर्थः। धर्म्मिणोऽपि तादात्म्यसम्बन्धेन धूमादिमतोऽपि व्याप्यत्वं, वह्न्यादि-

न्नाया प्रतियोगिता तदनवच्छेदकवह्निमत्त्वावच्छिन्नस्य वह्निमतस्तादात्म्येन सम्बन्धिनि महानसे धूमवत-स्तादात्म्येन सम्बन्धित्वम्। एवं धर्म्मिणो धर्म्म-व्याप्यत्वव्यापकत्वे बोध्ये अतएव जलादीनां पृथिवीत्वा-भावव्याप्यत्वं तत्र तत्रोक्तं सङ्गच्छते।

यथाच यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता, तादृशेन सम्बन्धेन तस्य पक्षवृत्तित्वज्ञाने यादृशेन सम्बन्धेन च साध्यस्य व्यापकत्वमवगतं, तादृशेनैव साध्यपक्षयोर्विशिष्टानुमितिः, तेन न धूमावयवे संयो-गेन न वा समवायेन पर्व्वते वह्निधीः। तथैवावगतव्या-

---

व्याप्यत्वम्। सुतरां धूमादिव्यापकत्वञ्च वह्न्यादिमतस्तादात्म्येन। निर्व्वहतीति, सम्बन्धित्वानिवेशे च तादात्म्येन साध्यस्य हेतोश्च अ-धिकरणत्ववृत्तित्वासिद्ध्या न तन्निर्व्वाह इति भावः। धर्म्मिणो धर्म्म-व्याप्यत्वस्य सिद्धान्तसिद्धत्वं दर्शयति,अतएवेति। तादात्म्येन धर्म्मिणो धर्म्मव्याप्यत्वादेवेत्यर्थः व्यापकताघटकस्वरूपसम्बन्धेन पृथिव्यां पृथि-वीत्वाभावरूपव्यापकनिवृत्त्या व्याप्यताघटकतादात्म्यसम्बन्धेन व्या-प्यजलाद्यभावरूपजलादिभेदसाधनार्थं, व्यतिरेक्यादिग्रन्थे तदुपन्या-सोऽपि सङ्गच्छते इत्यावेदयितुम् अन्वयिदृष्टान्तदर्शनपूर्व्वकं परिहर-ति। यथाचेति,तादात्म्येनेति। अन्यथा समवायेन जलादीनां पृथिवी-त्वाभावव्याप्यत्वपरत्वे समवायेनैव जलाद्यभावः सिध्येत इति भावः।

प्रकताघटकसम्बन्धेन व्यापकस्याभावग्रहे गृहीतव्याप्यताघटकसम्बन्धेन व्याप्यस्याभावः सिध्यतीति, कथमन्यथा समवायेन वह्निविरहिणि महानसे, संयोगेन वा वह्निविरहिणि स्वावयवे धूमः समवायेन न निवर्त्तते निवर्त्तते च संयोगेन वह्निविरहिणि स्वावयवे संयोगेनेति नियम उपपद्यते, तथाच तादात्म्यसम्बन्धेन जलादीनां व्याप्यत्वग्रहाद्व्यापकनिवृत्त्या तादात्म्येनैव तेषामभावः सिध्यति स एव चान्योन्याभावः । इत्थमेव च तादात्म्येन वृक्षशिंशपयोर्व्याप्तिनिश्चय इति सङ्गच्छते, अतएव गोत्वाद्यग्रहदशायां यत्र सास्नादिः सा गौरिति तादात्म्येन गोर्व्यापकत्वग्रहे सास्नादिना तादात्म्येन गौः, तादात्म्येन गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः सिध्यति, एवञ्च संयोगेन गगनादेरपि द्रव्यत्वव्याप्यत्वं, वृत्त्यनियामकसंयोग-

---

ननु एतावतापि जलस्य तादात्म्यसम्बन्धेनाभावः सिद्धो न तदन्योन्याभावः इत्यत आह, स एवेति । तादात्म्येन जलाद्यभाव एव जलाद्यन्योन्याभाव इति प्रकृतम् । धर्म्मिणो व्याप्यव्यापकत्वोभयसिद्धिप्रयोजनमाह, इत्थमेव चेति । अयं वृक्षः सिंशपायाः इत्यत्र इत्यर्थः । धर्म्मिणो व्यापकत्वे संवादमाह, अतएवेति । गोत्वं गवेतरावृत्तित्वं तस्यानुपस्थितिदशायां इयं गौः सास्नायाः इत्यनुमितेर्न गोत्वविधेयकत्वमुपपद्यते अपि तु गोविधेयकत्वमेव, तेन साध्य-

मात्रस्याभावप्रतियोगितावच्छेदकसम्बन्धरूपत्वे साध्य-तावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वाभिधाने वा पृथिवीत्वादिव्यापकत्वमपि, तदभाववतोऽपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वात्, सिद्धिरपि तस्य तथैव नतु वृत्तिनियामकसम्बन्धेन तेनासम्बन्धित्वादव्यापकत्वाच्च व्यक्तीभविष्यति चैतदुपरिष्टात् ॥ १७ ॥

नन्वष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्म्मस्य विशेषणताविशेषेणाव्याप्यवृत्तिः, किमपि व्यापकं न

---

वदन्यावृत्तित्वरूपव्याप्तिज्ञानस्य हेतुत्वेऽपि न निस्तार (१) इति भावः। ननु गोः साध्यत्वेऽपि साध्यासमानाधिकरणान्योन्याभाव-प्रतियोगितानवच्छेदकत्वस्य धर्म्मितावच्छेदकतया गोत्वस्योप-स्थितिरावश्यकी इत्यत आह, आदीति। आदिपदात् पक्षधर्म्म-तापरिग्रहः, तथाच गोत्वाद्यनुपस्थितौ इत्यस्य गवेतरावृत्तित्व-रूपव्याप्तिविशिष्टस्य पक्षवृत्तित्वाद्यनुपस्थितौ इत्यर्थः तादात्म्येन गोविधेयकत्वमावश्यकमित्याशयः॥ १७ ॥

महाकाले कालिकसम्बन्धेनाभावमात्रस्यैव स्वप्रतियोगिसमा-नाधिकरणतया निरुक्तप्रतियोग्यसमानाधिकरणघटितव्यापकत्वा-

---

(१) तादृश्यानुमितेर्न गोत्वसाध्यकतयोपपत्तिरित्यर्थः। अनुमितेर्व्यापकताव-च्छेदकरूपावच्छिन्नविधेयताकत्वनियमादेव च तादात्म्येन धर्म्मिणो गोर्व्यापकत्व-मावश्यकमिति भावः।

स्यात् । स्वावच्छेदकसम्बन्धेन प्रतियोगिनोऽसम्बन्धिनि काले वर्त्तमानस्याभावस्य प्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वस्य तेन सम्बन्धेन यत्प्रतियोगिसम्बन्धितदन्यत्वस्य च कालेऽसम्भवात् । न च तादृशसम्बन्धेन

---

प्रसिद्धा स्वव्यापकसाध्यसामानाधिकरण्यरूपं व्याप्यत्वमपि साधनस्यासिद्धमित्याशङ्कते, नन्वष्टद्रव्यातिरिक्तेति पृथिव्याद्यष्टद्रव्यातिरिक्तेत्यर्थः । अष्टद्रव्येति वस्तुस्थित्यभिप्रायेण गगनादेः कालत्वविरहादेव तद्भेदा न निवेश्याः, तथाच पृथिव्यादिचतुर्द्रव्यातिरिक्तेत्येव पर्य्यवसितम् । तथाच कालो घटवान् महाकालत्वादित्यादौ अव्याप्यवृत्तिघटादिकं किमपि, कालिकविशेषणताविशेषेण तादृशधर्म्मस्य महाकालत्वस्य व्यापकं न स्यादित्यर्थः । खण्डकालवृत्तिधर्म्मस्याधिकरणे, भिन्नकालीनवस्तुनोऽभावस्य स्वप्रतियोग्यसमानाधिकरणस्य प्रसिद्धा नाव्यापकत्वमतोऽष्टद्रव्यातिरिक्तेति, तादृशमहाकालवृत्तिसत्त्वाद्रव्यत्वादेरपि व्यापकत्वं नानुपपन्नमिति मात्रपदं तथाच महाकालत्वमेव तादृशधर्म्मः । व्याप्यवृत्तिवाच्यत्वादौ प्रतियोगिवैयधिकरण्यघटितव्यापकत्वाभावस्य इष्टत्वादव्याप्यवृत्तीति प्रतियोगितायां साध्यताघटकसम्बन्धावच्छेद्यत्वमभिप्रेत्य आपादकमुल्लिखति, स्वावच्छेदकेति । साध्यताघटकसम्बन्धेनैव प्रतियोग्यसम्बन्धित्व न तु प्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वमित्यभिप्रेत्याह, तेन सम्बन्धेनेति । साध्यतावच्छेदकसम्बन्धेनेत्यर्थः ।

न च कालिकविशेषणतया तादृशधर्म्मव्यापकत्वाप्रसिद्धा-

हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगितावच्छे-
दकविशिष्टप्रतियोगिसामान्यकत्वमेव वक्तव्यं तथाचा-
वृत्तिगगनाद्यभावद्वारिकैव तत्सिद्धिः। सत्ताद्यधिकरण-
कर्म्मादौ समवायेन ज्ञानसामान्यस्य संयोगसामान्यस्य
चावृत्तेर्नातिप्रसङ्गः, भूतत्वमूर्त्तत्वोभयत्वविशिष्टगुण-

---

तदभावरूपाद्याप्रसिद्धिः तादृशधर्म्मनिरूपिताव्याप्यवृत्तिगतप्रति-
योगिव्यधिकरणत्वघटितव्यापकत्वसामान्ये, कालिकविशेषणतास-
म्बन्धावच्छेद्यत्वाभावस्यैव निरुक्तप्रतियोगिवैयधिकरण्यघटितत्वेना-
पाद्यत्वादिति ।

सार्व्वभौमोक्तमाशङ्क्य निषेधति, न चेति । वाच्यमित्यग्रेऽन्व-
यः । तादृशेति साध्यताघटकसम्बन्धेन किञ्चिद्धेत्वधिकरणनिरूपितं
यद्वृत्तित्वं तच्छून्यस्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामा-
न्यकहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वमेवात्र
व्यापकत्वमित्याशयः। साध्यतावच्छेदकसम्बन्धेनेत्यस्य प्रयोजनमाह ।
सत्ताद्यधिकरणेति । तेन ज्ञानवान् संयोगवान् वा सत्त्वादित्यादौ
विषयतया ज्ञानसामान्यस्य समवायेन एकार्थसमवायेन च संयोग-
सामान्यस्य सर्व्वत्र हेत्वधिकरणे वर्त्तमानत्वेऽपि नातिव्याप्तिरिति ।
ननु यत्किञ्चिद्धेत्वधिकरणावृत्तिस्वप्रतियोगिसामान्यकाभावेत्येव
कथं नोक्तमित्यत आह, भूतत्वमूर्त्तत्वोभयेति । हेत्वधिकरणे मनसि
भूतत्वमूर्त्तत्वोभयाभावस्य स्वप्रतियोगिनो मूर्त्तत्वस्य वृत्तित्वेऽपि
तादृशोभयत्वरूपस्वप्रतियोगितावच्छेदकविशिष्टस्यावृत्तित्वान्नाति-

कर्म्मान्यत्वविशिष्टसत्तात्वविशिष्टसत्तादिकन्तु न मनो-गुणादिवृत्ति, संयोगसामान्यन्तु न किञ्चिद्द्रव्यावृत्तीति वाच्यं विशिष्टस्यानतिरिक्तत्वात् । समवायेन जातिः साध्यत्वे मेयत्वादावतिव्याप्तिः, जातिमन्निष्ठतादृशाभाव-प्रतियोगिताया जातित्वेनानवच्छेदात्, जातिशून्ये च तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः । संयोगादिसाध्यकगुण-कर्म्मान्यत्वादौ चातिव्याप्तिः, अद्रव्ये हेतुमति तादृश-सम्बन्धेन वृत्तेरप्रसिद्धेः,द्रव्ये च संयोगादेरपि वृत्तेः॥ १८॥

---

व्याप्तिरिति । संयोगी द्रव्यत्वादित्यत्राव्याप्तिवारणरूपं सामान्यपद-प्रयोजनमाह, संयोगसामान्यन्त्विति । सामान्यपदानुक्तौ च घटा-नुयोगिकत्वविशिष्टसंयोगस्य संयोगसामान्याभावप्रतियोगिनः द्रव्य-त्वाधिकरणे पटे अवृत्तित्वेनाव्याप्तिरिति भावः ।

विशिष्टस्येति । गुणे गुणकर्म्मान्यत्वविशिष्टसत्तेति प्रतीतेः वैशिष्ट्या-वच्छेदेनाधेयत्वस्यापि शुद्धसत्तात्वावच्छिन्नाधेयतातः अभिन्नत्वादि-त्यर्थः, तथाच तादृशविशिष्टसत्तावान् जातेरित्यादौ स्वप्रतियोगिता-वच्छेदकविशिष्टसत्तात्वविशिष्टसत्तासामान्यस्य गुणवृत्तित्वेन साध्या-भावस्य लक्षणाघटकतयातिव्याप्तेरिति भावः । विशिष्टस्यातिरिक्तत्व-नयेऽपि दोषमाह, समवायेनेति । साध्यताघटकसम्बन्धेनैव यत्कि-ञ्चिद्देत्वधिकरणावृत्तित्वं वाच्यं, तथाच व्यभिचारनिरूपकजात्यादि-निरूपितसमवायावच्छिन्नवृत्तित्वाप्रसिद्धेरतिव्याप्तेरिति भावः ॥१८॥

मैवं, साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षितत्वात्। धूमसंयोगे वह्न्यधिकरणायोगोलकानुयोगित्वस्य चैतान्यत्वविशिष्टैतद्दण्डसंयोगे एतद्दण्डाधिकरणचैत्रानुयोगिकत्वस्य गुणकर्म्मान्यत्वविशिष्टसत्तासमवाये च जात्यधिकरणगुणानुयोगिकत्वस्य विरहान्नातिप्रसङ्गः। स्वरूप-

---

खण्डश: प्रसिद्धा गगणाद्यभावमादायाव्याप्तिमुद्धर्त्तुमाह, मैवमिति। संयोगत्वेन संयोगमात्रस्यैव साध्यताघटकत्वेन भूतलाद्यनुयोगिकसंयोगविशेषे स्वप्रतियोगिप्रतियोगिकत्वघटिततादृशोभयाभावसत्त्वेन, तादृशवह्न्यभावमादाय वह्न्यादिसाध्यकाव्याप्तिपरिहाराय सामान्ये इति। सामान्यपदस्य व्यापकत्वतात्पर्य्यकतया, साध्यताघटकसंसर्गत्वव्यापकतादृशोभयसामान्याभावकाभावप्रतियोगितानवच्छेदकं यद्रूपं तद्रूपावच्छिन्नसामानाधिकरण्यमिति समुदितार्थः, तथाच साध्यताघटकसम्बन्धसामान्यान्तर्गतधूमाधिकरणाद्यनुयोगिकसंयोग एव तादृशोभयाभावविरहात् नाव्याप्तिरिति। तादृशप्रतियोगिप्रतियोगिकत्वविशिष्टहेत्वधिकरणानुयोगिकत्वाभावोक्तौ, गगनप्रतियोगिकत्वविशिष्टमहाकालानुयोगिकत्वाप्रसिद्धा गगनाभावस्यापि अतथात्वेनाव्याप्तेस्तादवस्थ्यमित्यत उभयाभाव उक्तः। यत्किञ्चिदित्यस्य फलमाह, धूमसंयोग इति। ननु "जन्यानां

सम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम् । समवायसम्बन्धेन मेयसामान्याभावस्य सामान्यादौ सत्त्वान्मेयत्वादेरप्यभावप्रतियोगितावच्छेदकत्वं सुलभम् । अतएव समवायस्यैकत्वेन द्रव्यत्वादिप्रतियोगिकत्व-

---

जनकः कालो जगतामाश्रयो मतः ।" इत्यादिस्मरणात् महाकाले जगदाधारत्वप्रवादसिद्धये गगनाद्याश्रयत्वमावश्यकं इति तदनुयोगिकविशेषणतायां निरुक्तोभयाभावासत्त्वमित्यत आह, गगनादेरिति निरुक्तेति । स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेतुतावच्छेदकविशिष्टाधिकरणवृत्त्यभावीयप्रतियोगितासामान्ये इत्यर्थः । धूमवान् वह्नेरित्यादौ तादृशघटाद्यभावप्रतियोगितायां धूमत्वावच्छेद्यत्वसंयोगावच्छेद्यत्वयोरभावसत्त्वात्, संयोगेन धूमस्य व्यापकत्वापत्तिरित्यतः सामान्ये इति, तथाच सामान्यान्तर्गतधूमत्वावच्छिन्नप्रतियोगितायामेव तदुभयोः सत्वेन नातिव्याप्तिरिति । न च निरुक्तप्रतियोगितायां यदवच्छेद्यत्वयदवच्छेद्यत्वोभयाभावः तेन तद्धर्मावच्छिन्नस्य व्यापकत्वमित्येवोच्यतामलं धर्मसम्बन्धपदयोरुपादानेनेति वाच्यं । समवायिनः संयोगेन साध्यतायां घटत्वादिहेतावव्याप्तेः, साधनसमानाधिकरणस्य समवायेन संयोगिसामान्याभावो-

गुणाद्यनुयोगित्वोभयसत्त्वेऽपि द्रव्यं जातेरित्यादौ वह्निधूमोभयवान् वह्नेरित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि च नातिव्याप्तिरित्यपि वदन्ति ॥ १८ ॥

प्रतियोगित्वादिश्च स्वरूपसम्बन्धविशेषो न सम्बन्धत्वेन निविष्टः सामानाधिकरण्येऽपि सम्बन्धः संयोग-

---

यप्रतियोगितायामुभयोः सत्त्वात्। तन्निवेशे च, तादृशप्रतियोगितायां धर्म्मविधया समवायावच्छेद्यत्वस्य सम्बन्धविधया च संयोगावच्छिन्नत्वस्याभावादेव नाव्याप्तिरिति दिक्। ननु साध्यीयसाध्यतावच्छेदकसम्बन्धसामान्ये, यादृशप्रतियोगिप्रतियोगिकत्वघटिततादृशाभाव इत्युक्तौ पूर्व्वनिरुक्तैः परिष्कारेण पटाद्यभावमादायैवोक्ताव्याप्तिनिराससम्भवे कल्पान्तरानुसरणं सन्दर्भविरुद्धमत आह, अतएवेति। समवायस्यैकत्वेनेति। लाघवमनुसन्धाय नित्यैकसमवायाङ्गीकर्त्तृनये इत्यादि। समवायस्य नित्यत्वानङ्गीकर्त्तृनयेऽपि दोषमाह, वह्निधूमोभयेति। सम्बन्धमात्रस्यैव एकप्रतियोगिकत्वमपरानुयोगिकत्वं नतूभयप्रतियोगिकत्वं क्वापि प्रसिद्धं, प्रकारित्वादेरपि तन्मते संसर्गत्वं नेष्टमिति, साध्याभावस्य स्वप्रतियोगितावच्छेदकद्वित्वावच्छेद्यत्वाप्रसिद्ध्यैव धर्त्तुमशक्यत्वादतिव्याप्तिरिति भावः ॥ १८ ॥

ननु प्रतियोगित्वादिप्रवेशे आत्माश्रय इत्यत आह, प्रतियोगित्वादिरिति। आदिपदादधिकरणत्वादिपरिग्रहः। ननु प्रतियोगित्वस्य प्रतियोगित्वत्वेनैव लक्षणे प्रवेशात् विना सम्बन्धत्वं तत्प्रवेशो

त्वादिनैव निविशते दर्शितञ्च नियमाघटितमपि सम्बन्धत्वम्। अभावत्वञ्चेदमिह नास्तीदमिदं न भवतीतिप्रतीतिनियामकोऽभावाभावसाधारणः स्वरूपसम्बन्धविशेषः, अतो नाभावसाध्यकव्यभिचारिण्यतिप्रसङ्गः। तदपि वा नोपादेयं प्रयोजनविरहात् विषयतातत्त्वादिवत् प्रतियोगितातत्वाधिकरणत्वतत्त्वसम्बन्धत्वतत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येकदेशिनः॥ २०॥

इति अनुमानदिधितौ सिद्धान्तलक्षणं समाप्तम्।

---

विरुद्ध इत्यत आह, दर्शितञ्चेति। विशेष्यविशेषणान्यविशिष्टधीविषयत्वरूपमित्यर्थः। ननु वह्न्यभाववान् मेयत्वादित्यत्र सप्तमपदार्थस्वरूपाभावाप्रतियोगित्वादतिव्याप्तिरित्यत आह, अभावत्वञ्चेति। युक्तञ्चैतत्, घटाभावो नास्तीतिप्रतीतेः प्रमात्वानुरोधेनाभावान्तरकल्पनाप्रयासाभावादिति, इदमिह नास्तीतिप्रतीतिनियामकभावसाधारणाभावत्वस्य प्रवेशे तादात्म्येन सम्बन्धेन साध्यतायां व्यभिचारिण्यतिव्याप्तिः तादृशप्रतीतिनियामकाभावप्रतियोगिताया अन्योन्याभावप्रतियोगितानात्मकत्वेन तादृशाभावप्रतियोगितायामुभयाभावसत्वादत आह, इदमिदं न भवतीति। इदमेव समर्थयति, अत इति। ननु यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणान्यत्वं हेतुमतस्तादृशप्रतियोगितायामुक्तो-

## अथावच्छेदकत्वनिरुक्तिः ।

नन्ववच्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः सम्भवति च लघौ धर्म्मे गुरौ तदभावात्, प्रमेयधूमत्वकम्बुग्रीवादिमत्त्वघ्राणग्राह्यगुणत्वादेरतथात्वेन तेन रूपेण साध्यतायां व्यभिचारिण्यतिप्रसङ्गात् नाप्यनतिरिक्तवृत्तित्वं प्रतियोगितायाः स्वरूपसम्बन्धात्मिकायाः प्रति-

---

भावाभावविवक्षणादेव सामञ्जस्येऽभावपदं व्यर्थमित्यत आह, तदपि वेति। एकदेशिन इति। तथाच सुतरां नात्माश्रय-इति भावः ॥ २० ॥

इति महामहोपाध्यायकृष्णदाससार्व्वभौमप्रणीतायां
अनुमानदीधितिप्रसारिण्यां सिद्धान्त-
लक्षणं समाप्तम् ।

---

## अथावच्छेदकत्वनिरुक्तिः ।

### प्रसारिणी ।

ननु धूमत्वमेव प्रमेयधूमत्वं विशिष्टस्यानतिरिक्तत्वात् तच्चावच्छेदकमेवेत्यत आह, कम्बुग्रीवादिमत्त्वमिति । ननु कम्बुग्रीवादिमत्त्वमपि न लघ्ववच्छेदकान्तरनियतं तस्य सौवर्णघटवृत्तितया घटत्वजात्यतिरिक्तवृत्तित्वादित्यत आह, घ्राणग्राह्येति । गन्धसमने-

व्यक्तिभिन्नत्वेन धूमत्वादेरपि तदतिरिक्तवृत्तित्वात् । न च तथाविधयत्किञ्चिदेकाभावप्रतियोगितासामान्यशून्यावृत्तित्वं तत् अतएवातिरिक्तसामान्याभावस्याभावे धूमत्वादेरप्यनवच्छेदकत्वापातादग्रे तत्साधनमपि साधु-सङ्गच्छत इति वाच्यम् । वह्निघटवृत्तित्वतार्णातार्णदहन-वृत्तिद्वित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रतियोगितान-तिरिक्तवृत्तिवह्नित्वादावतिप्रसङ्गात् । एतेनान्यूनवृत्तित्व-विशेषितमपि परास्तम्, अतएव नानाप्रतियोगिवृत्त्येक-

---

यत्वार्थं गुणत्वेति । तथाविधेति । हेतुसमानाधिकरणप्रतियोगिव्य-करणेत्यर्थः, यत्किञ्चिदेकेति वह्निमान् धूमादित्यत्र धूमसमा-नाधिकरणतत्तद्वह्न्यभावप्रतियोगितानतिरिक्तवृत्त्येव वह्नित्वमिति तद्वारणाय यत्किञ्चिदेकेति । न चानुपदमेवोक्तेन तदपि वेत्यनेन विरोधः, प्रतियोगितानुगमार्थमेव तदा तस्योचितत्वादिति । वह्निघटवृत्तिद्वित्वावच्छिन्नप्रतियोगितायान्यूनवृत्त्येव वह्नित्वमिति । तार्णेति । अतिप्रसङ्गात् अवच्छेदकत्वलक्षणातिप्रसङ्गात्, एतेन तार्णातार्णोभयवृत्तिद्वित्वावच्छिन्नाभावेन । एकेति । सामान्या-भावस्य नानाप्रतियोगिताकल्पनमपेक्ष्य लाघवादेकैव प्रतियोगिता कल्प्यते, तथाचैकप्रतियोगितानतिरिक्तवृत्तित्वमेव वक्तव्यमित्य-भावो न निवेशनीय इति ये वर्णयन्ति तेऽप्युपदर्शित-तार्णातार्णवृत्तिद्वित्वावच्छिन्नाभावेन निरस्ताः, ननु प्रमेयधूमत्वा-

प्रतियोगिताङ्गीकारेऽपि न निस्तारः। लघुरूपसमनियत-गुरुरूपेण साध्यतायां तद्धेतावव्याप्तिः तादृशतदवच्छिन्न-त्वाप्रसिद्धेरिति चेन्न, प्रतियोगितावच्छेदकानतिरिक्त-वृत्तित्वस्य विवक्षितत्वात्। स्वसमानवृत्तिकञ्चावच्छे-दकं ग्राह्यं तत्त्वञ्च स्वपर्य्याप्त्यधिकरणपर्य्याप्तिवृत्तिकत्वं, यावत्त्वादिकन्तु न तथा, पर्य्याप्तिश्चायमेको घट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः एवं त्रित्वादिकमपि न द्वित्वादिसमानवृत्तिकमिति द्वित्वा-

---

दीनामनवच्छेदकत्वेऽपि तदवच्छिन्नत्वाप्रसिद्धेरेव प्रतियोगि-तापत्तक उभयाभावघटितव्याप्तिलक्षणस्य नातिव्याप्तिरित्यत आह, लघुरूपेति। स्वं पारिभाषिकमवच्छेदकम्। ननु तर्णातार्णो-भयवृत्तिद्वित्वं वह्नित्वसमनियतमेवेत्यत आह, तत्त्वञ्चेति। तथाच वह्नित्वपर्य्याप्त्यधिकरणपर्य्याप्तत्वं न द्वित्वस्येति न वह्नित्वमवच्छे-दकमिति। न तथा, न वह्नित्वाधिकरणैकपर्य्याप्तम्। अयमेक इति। दृष्टान्तार्थं, ननु वह्निधूमोभयवान् धूमादित्यत्र रासभमा-दाय तादृशत्रित्वमेव स्वरूपसम्बन्धरूपावच्छेदकत्ववत् व्यासज्यवृत्ति-तया द्वित्वाधिकरणपर्य्याप्तिकञ्चेत्यत आह, त्रित्वादिकमिति (१)।

---

(१) स्ववृत्तिव्यासज्यवृत्तित्वतदभाववत्त्वान्यतररूपवत्त्वमेव स्वसमानवृत्तिकत्व-मिति त्रित्वमपि द्वित्वसमानवृत्तिकं स्यादित्याशङ्कयोक्तं द्वित्वाधिकरणेति। तथाच स्वपर्य्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्य्याप्तिकरूपं स्वसमानवृत्तिकं द्वित्वस्य न त्रित्वमिति भावः।

दिना साध्यतायां नाव्याप्तिः। घटकत्वावच्छेदकत्वं स्वरूपसम्बन्धविशेषः एवञ्च यद्धर्म्मावच्छिन्नेत्यत्र यद्धर्म्मान्यूनवृत्तिधर्म्मावच्छिन्नेति वक्तव्यं तेनोक्ताव्याप्तिनिरासः॥ २१॥

वस्तुतस्तु तदवच्छिन्नप्रतियोगिताकाभाववदसम्बद्ध-

---

ननु प्रतियोगिताधर्म्मिकोभयाभावविवक्षायां धूमसमानाधिकरणाभावप्रतियोगितायां वह्नित्वानतिरिक्तवृत्तितद्वह्नित्वावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयसत्त्वादव्याप्तिरित्यत आह, एवञ्चेति। तथाच साध्यतावच्छेदकान्यूनवृत्तिधर्म्मावच्छिन्नत्वाभाव-सत्त्वादुभयाभावोऽक्षत एवेति। उक्ताव्याप्तिः। प्रमेयवह्निमान् धूमादित्यत्राव्याप्तिः। प्रमेयवह्नित्वावच्छिन्नत्वस्याप्रसिद्धेरिति॥ २१॥

वक्ष्यमाणं सत्तावान् जातेरित्यादौ दोषमाकलय्याह, वस्तुत इति। तदवच्छिन्नेति। यत्, प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वं स्वरूपसम्बन्धरूपं, तद्वदवच्छिन्नाभाववति यद्विशिष्टसामान्यमसम्बद्धं, तत् पारिभाषिकमवच्छेदकमित्यर्थः, भवति हि वह्निसामानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं धूमत्वं तदवच्छिन्नाभाववति प्रमेयधूमत्वविशिष्टसामान्यमसम्बद्धमेवेति प्रमेयधूमत्वस्य पारिभाषिकमवच्छेदकत्वमव्याहतमेव। ननु धूमसामानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं महानसीयवह्नित्वं, तदवच्छिन्नाभाववति वह्नित्वविशिष्टं यत्किञ्चिदसम्बद्धमेवेति वह्नित्वस्यापि तदा-

स्वविशिष्टसामान्यकत्वम् । स्वविशिष्टसम्बन्धिनिष्ठाभाव-प्रतियोगितानवच्छेदकतत्कत्वं वा तदनतिरिक्तवृत्तित्वं

---

पन्नमित्यत आह, सामान्येति । स्वविशिष्टस्यानुयोगिकत्वात् सामान्याभावो न घटत इति हृदयम् । तादात्म्येन वह्निमति साध्ये स्वरूपसम्बन्धरूपप्रतियोगितावच्छेदकमहानसीयवह्नित्वं तदवच्छिन्नाभाववति तादात्म्येन वृत्तेरप्रसिद्धेस्तदवृत्तित्वरूपपारिभाषिकावच्छेदकाप्रसिद्धौ तद्भिन्नत्वं साध्यतावच्छेदकस्याप्रसिद्धमित्यव्याप्तिरतोऽसम्बद्धेति । तथाच तादात्म्येन सम्बद्धत्वं प्रसिद्धमिति तदसम्बद्धत्वरूपावच्छेदकत्वप्रसिद्धौ तद्भिन्नत्वं साध्यतावच्छेदकस्याक्षतमिति ध्येयम् । अत्र तदवच्छिन्नमित्यत्र येन सम्बन्धेन अवच्छिन्नप्रतियोगितायाः स्वरूपसम्बन्धरूपमवच्छेदकत्वं तेनैव साध्यतावच्छेदकसम्बन्धेन वा तदवच्छिन्नप्रतियोगित्वं बोध्यं, तेन संयोगेन धूमे साध्ये व्यभिचारिणि संयोगेन अवच्छिन्नप्रतियोगितायाः स्वरूपसम्बन्धरूपावच्छेदकीभूत-धूमत्वावच्छिन्न-समवायसम्बन्धावच्छिन्नाभाववति महानसादौ धूमत्वविशिष्टस्य सम्बद्धत्वेऽपि न क्षतिः । असम्बद्धत्वमपि तेनैव, साध्यतावच्छेदकसम्बन्धेन वा, तेन ज्ञानवान् द्रव्यत्वादित्यत्र तादृशप्रतियोगितावच्छेदकीभूततदवच्छिन्नाभाववति घटादौ विषयतासम्बन्धेन ज्ञानस्य सम्बद्धत्वेऽपि न क्षतिः । ननु जातिमान्मेयत्वादित्यत्र मेयत्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यज्जातित्वं तदवच्छिन्नाभाववति जात्यादौ साध्यतावच्छेदकीभूतसमवायसम्बन्धेन सम्बद्धत्वस्या-

वक्तव्यम्, अतएव सत्तावान् जातेरित्यादौ जातिमन्निष्ठाभावप्रतियोगितावच्छेदकगुणान्यत्वविशिष्टसत्तात्वतुल्य-

---

प्रसिद्धा जातित्वस्य पारिभाषिकमवच्छेदकत्वं व्याहतमित्यत आह, स्वविशिष्टेति। स्वं पारिभाषिकमवच्छेदकम्। सम्बन्धीत्यत्रापि तादात्म्येनावच्छेदकत्वसंग्रहाय सम्बन्धानुधावनं तत्कत्वं स्वरूपसम्बन्धरूपावच्छेदकत्वमित्यर्थः। भवति हि जातित्वविशिष्टसम्बन्धिनिवर्त्तन्ते ये येऽभावास्तत्प्रतियोगितानवच्छेदकं तादृशजातित्वमिति जातित्वस्य न पारिभाषिकावच्छेदकत्वहानिः। अत्र प्रतियोगित्वं सम्बन्धित्वं च साध्यतावच्छेदकसम्बन्धेन स्वयमेव वक्तव्यम्, तेन धूमत्वविशिष्टसम्बन्धिनि स्वावयवे वर्त्तमानो योऽभावस्तत्प्रतियोगितावच्छेदकत्वेऽपि धूमत्वस्य न क्षतिः। न वा धूमत्वविशिष्टसम्बन्धिनि पर्व्वतादौ योऽभावः समवायसम्बन्धेन तत्प्रतियोगितावच्छेदकत्वेऽपि धूमत्वस्य न क्षतिः। अतएवेति। यत एव तदुभयमुक्तमिति भावः। न क्षतिरिति। अवच्छेदकानतिरिक्तवृत्तित्वमात्रविवक्षणे तत् क्षतिरिति भावः। अत्र वस्तुतो महाकालो घटवान् इत्यत्र नित्यान्यसंयोगित्वमहाकालान्यवृत्तित्वविशिष्टघटत्वादिकमेव तथा प्रसिद्धम्, एतदप्यवच्छेदकलक्षणं शोभनमिति केचित्। ननु कालिकसम्बन्धेन घटादौ साध्ये महाकालपरिमाणहेतौ, हेतुसामानाधिकरण्यप्रतियोगिव्यधिकरणाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वम--प्रसिद्धम्। न च गगनत्वादिकमेव तथाविधं सुलभम्। गगनत्व-

वृत्तिकत्वेऽपि सत्तात्वस्य न क्षतिः। एवं स्वविशिष्टसम्ब-
न्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं बोध्यं

---

विशिष्टसम्बन्ध्यप्रसिद्धया तस्य पारिभाषिकावच्छेदकत्वविरहात्, एवं गगनादेर्वृत्तिमत्त्वे तु सुतरामप्रसिद्धिः। किञ्च ईश्वरज्ञानं घटवत् नित्यज्ञानत्वादित्यत्र नितरामेव तादृशावच्छेदकाप्रसिद्धि-रित्यतोऽवच्छेदकघटितं लक्षणं विहाय पूर्व्वोक्तप्रतियोगिता धर्म्मि-कोभयाभावविवक्षायां यद्धर्म्मान्यूनवृत्तित्वोक्तौ सत्तावान् जाते-रित्यत्रैव गुणकर्म्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रतियोगितायां स-त्तात्वान्यूनवृत्तिगुणकर्म्मान्यत्वविशिष्टसत्तात्वावच्छिन्नत्वसत्त्वादुभ-याभावासत्त्वेनाव्याप्तिराह, एवमिति। स्वं साध्यतावच्छेदकम्। पद-व्यावृत्तिः पूर्व्ववद्बोध्या। अत्र च पूर्व्वोक्तस्थले कालपरिमाणं समा-नाधिकरणसमवायसम्बन्धावच्छिन्नघटाभावप्रतियोगितायां घटत्व-विशिष्टसम्बन्धिनिष्टाभावप्रतियोगितानवच्छेदकीभूतघटत्वावच्छि-न्नत्वसत्त्वेऽपि कालिकसम्बन्धावच्छिन्नत्वविरहादेवोभयाभाव इति क्रमेण लक्षणसमन्वय इति। ननु घ्राणग्राह्यगुणवान् पृथिवीत्वा-दित्यत्र पृथिवीत्वसमानाधिकरणात्यन्ताभावप्रतियोगितायां, घ्राण-ग्राह्यगुणत्वविशिष्ट-सम्बन्धिनिष्ठाभाव-प्रतियोगितानवच्छेदकीभूत-गन्धवत्त्वावच्छिन्नाभावे ग्राह्ये गन्धवत्त्वे तादृशावच्छेदकत्वाभाव-स्तत्प्रतियोगिको वा तदवच्छिन्नो वा आद्ये तद्गन्धवत्वादेरपि घ्राणग्राह्यगुणत्व-विशिष्टसम्बन्धि निष्ठाभावप्रतियोगितानवच्छेदक-त्वापत्ति, गौत्वनिष्ठस्य तदवच्छेदकत्वस्य तत्राभावात्, तथाच तद-

**तादृशप्रतियोगिताश्च विशिष्योपादेयाः नातो गुरोरवच्छेदकत्वं विना दुर्व्वचत्वं प्रतियोगित्वं सम्बन्धित्वञ्च साध्यतावच्छेदकसम्बन्धेन बोध्यमतो न सम्बन्धभेदमादाय दोषः ॥ २२ ॥**

---

वच्छिन्नप्रतियोगितायामुभयसत्त्वादेव व्याप्तिलक्षणाव्याप्तिः । अन्ये तु तादृशावच्छेदकत्वाभावस्य सामान्याभावतया तत्र घ्राणग्राह्यगुणत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वं गौरवेण हित्वा गन्धत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वमेवावच्छेदकं कल्प्यते लाघवात्, तथाच कथमस्य लक्षणस्यावतार इति प्रकृतसाध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावस्याप्रसिद्धिरित्यत आह, तादृशप्रतियोगिताश्चेति । केचित्तु हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितासु यावतीषु तादृशोभयाभावसत्त्वमित्यत्र प्रतियोगितात्वस्य तदुभयाभावव्याप्यत्वमित्येवार्थः, तथाचेयं पृथिवी घ्राणग्राह्यगुणादित्यत्र घ्राणग्राह्यगुणसमानाधिकरणात्यन्ताभावप्रतियोगितात्वं विहाय लाघवेन गन्धसमानाधिकरणात्यन्ताभावप्रतियोगित्वत्वमेव व्याप्यतावच्छेदकं कल्प्यत इत्यस्वरसादाह, तादृशप्रतियोगिताश्चेत्याहुः । तत्सन्दर्भविरोधादुपेक्षितं न च त्वन्मतेऽपि सामान्याभावस्थलाभिषिक्ततादृशावच्छेदकभेदकूटविवक्षणेऽवच्छेदकस्यैव विशेषतो ग्रहणमुचितमिति वाच्यम् । प्रथमोपस्थितत्वेन प्रतियोगिताया एव च विशेष्यग्रहात् । न च तथापि एकावच्छिन्ननाना-

कालिकविशेषणताविशेषेण च साध्यतायां तादृशप्रतियोगितावच्छेदकत्वमनित्यतत्तद्व्यक्तित्वे प्रसिद्धम्, अभावश्च प्रतियोगिव्यधिकरणो बोध्यः। न च मौलमिदमीयञ्च प्रतियोगिवैयधिकरण्यमनुपादेयं, संयोगत्वाद्यवच्छिन्नाभाववति संयोगत्वादिविशिष्टस्य वृत्ते-

---

प्रतियोगितानां विशेषतो ग्रहणे गौरवम् एकावच्छेदकावच्छेद्या एकैव प्रतियोगिता कल्प्यत, लाघवादित्यभिप्रायान्न प्रतियोगित्वमित्यादि व्याख्यातप्रायम्। सम्बन्धभेदमिति धूमवान् वह्नेरित्यत्र धूमनिष्ठप्रतियोगितायां धूमत्वस्य प्रमेयधूमवह्निष्ठसमवायसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकतया तादृशानवच्छेदकावच्छेद्यत्वं व्याहतमिति, एवं प्रमेयधूमसमवायिनिष्ठाभावप्रतियोगितामादायापि न दोष इति बोध्यम्॥ २२॥

ननु कालिकसम्बन्धेन कालो घटवान्न घटादित्यत्र कालिकसम्बन्धेन घटत्वविशिष्टसम्बन्धिनिष्ठतादृशाभावप्रतियोगितावच्छेदकत्वमप्रसिद्धमित्यत आह, कालिकेति। तत्तद्व्यक्तित्व इति। घटत्वविशिष्टसम्बन्धिन्यस्मिन् कालोपाधौ वर्त्तमानो यः कालिकसम्बन्धावच्छिन्नोऽत्यन्ताभावस्तत्प्रतियोगितावच्छेदकत्वमतीततत्तद्व्यक्तित्वे प्रसिद्धमिति। इदमियम्, अवच्छेदकलक्षणान्तर्गतमित्यर्थः। संयोगत्वेति। मौलप्रतियोगिव्यधिकरणपदादानेऽपि इदं कपिसंयोगि एतत्वादित्यत्र संयोगत्वस्यैतत्वसमानाधिकरणात्यन्ताभावीयस्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वेऽपि तदवच्छिन्ना-

गुणादिनिष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वत्वद्रव्यमा-त्रसमवेतत्वाद्यवच्छिन्नाभाववति चाव्रत्तेरव्याप्त्यतिव्या-प्त्योरनवकाशादिति वाच्यं, धूमवान् वह्नेरित्या-दावतिव्याप्तेः, न ह्युत्पत्तिकालावच्छेदेनापि महा-नसादौ किञ्चित् संयोगेन वर्त्तते, येन वह्निमदयो-

---

भाववति संयोगत्वविशिष्टस्य सत्त्वात्तस्य पारिभाषिकावच्छेदकत्वं व्याहतमिति न व्याप्तिलक्षणाव्याप्तिः। इदमीयपदादानेऽति-व्याप्तिमुद्धरति, गुणादीति। संयोगिसत्त्वादित्यत्र संयोगत्वगुणत्वा-वच्छिन्नाभावस्य प्रतियोगिसमानाधिकरणतया तदग्रहेऽपि द्रव्य-त्वत्वावच्छिन्नाभावस्य तादृशस्य यत्प्रतियोगितावच्छेदकं द्रव्यत्वत्वं तदवच्छिन्नाभाववति संयोगत्वविशिष्टस्यासम्बन्धत्वात् संयोगत्वस्य पारिभाषिकावच्छेदकत्वं सुलभमिति नातिव्याप्तिः। संयोगस्यापि प्रतियोगित्वमाविष्कर्त्तुमाह, द्रव्यमात्रेति। अवच्छेदकत्वलक्षणे तत्पदं प्रवेशयन्नाह, धूमवानिति। अत्र च तत्पदे दत्ते मूलेऽप्यव्या-प्तिवारणायावश्यं तत्पदं देयमिति हृदयम्। तदेव व्यतिरेकेन साध-यति, न ह्येत्यादि। अयमर्थः धूमवान् वह्नेरित्यत्र संयोगसम्बन्धेन वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यद्यत् उत्-पत्तिकालावच्छेदेन तादृशनिखिलावच्छिन्नाभाववति धूमत्वविशि-ष्टस्य सत्त्वाद्धूमत्वस्य पारिभाषिकावच्छेदकत्वमनुपपन्नमिति। येने-त्यादि। यदि किञ्चित्संयोगिनोत्पत्तिकालेऽपि वर्त्तेत तदाऽ-योगोलकावृत्तिद्रव्यत्वावच्छिन्नाभाववदयोगोलकमेव स्यात्तत्र च

**गोलकनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकायोगोलका-वृत्तिद्रव्यत्वाद्यवच्छिन्नाभाववदवृत्तित्वं धूमत्वविशिष्टस्य सम्भाव्येत ॥ २३ ॥**

---

धूमत्वविशिष्टस्य असम्बन्धत्वे न धूमत्वस्य पारिभाषिकावच्छेदकत्व-सम्भवेनेत्यर्थः। अयोगोलकावृत्तिद्रव्यत्वमित्यत्र द्रव्यत्वं, सयोग-सम्बन्धेनायोगोलकावृत्तित्वस्फोरणाय, न च धूमवान् वह्नेरित्यत्र पारिभाषिकताद्दशावच्छेदकाप्रसिद्धग्रा अवच्छेदकत्वघटितव्याप्ति-लक्षणं न गतमेवेति कुतोऽतिव्याप्तिरिति वाच्यम्। आद्यावच्छेद-कलक्षणे गगनस्यैव ताद्दशस्य सत्त्वात्, भवति हि वह्निसमानाधि-करणात्यन्ताभावप्रतियोगितावच्छेदकं गगनत्वं, तदवच्छिन्नाभाव-वति असम्बद्धं च, गगनत्वविशिष्टमिति। अथ तथापि द्वितीयलक्षणे ताद्दशावच्छेदकाप्रसिद्धिः, तथाहि वह्निसमानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकं गगनत्वं तच्च गगनत्वविशिष्टसम्बन्ध्यप्रसिद्धग्रा न पारिभाषिकावच्छेदकमिति चेन्न, किमेतावता अवच्छेदका-घटितैक्यमित्याद्युक्तलक्षणे प्रतियोगिव्यधिकरणपददानस्यावश्यक-त्वमित्यत्रास्य ग्रन्थस्य तात्पर्य्यात्। न च तत्राप्यप्रसिद्धिः, वह्नि-समानाधिकरणात्यन्ताभावप्रतियोगितायां धूमत्वविशिष्टसम्बन्धि-निष्ठ-तथाविधाभावप्रतियोगितानवच्छेदकीभूतजातित्वाद्यवच्छेद्य-त्वमादायोभयाभावसत्त्वात्। न च धूमत्वविशिष्टसम्बन्धिनिष्ठ-संयोगसम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वमेव जाति-त्वस्य कुतः, पर्व्वतादौ सर्व्वेषामेवोत्पत्तिकालावच्छेदेन संयोग-

प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वस्य विशेषणता-विशेषावच्छिन्नत्वस्य वा विवक्षणे, पुनरनुपादेयमेव प्रतियोगिवैयधिकरण्यद्वयम् । यत्राधिकरणे व्यभिचारस्तदन्यत्व--तदन्यत्वप्रकारकप्रमाविषयत्वत्व--साध्यवत्त्वप्रकारकप्रमाविषयत्वत्वादीनां साध्यतावच्छेदकविशिष्ट-

---

सम्बन्धावच्छिन्नाभावसत्त्वादिति वाच्यं, संयोगसम्बन्धावच्छिन्नजात्यभावस्य लाघवेन नित्यसमवेतत्वमेवावच्छेदकं कल्प्यतेन जातित्वं नित्यत्वादिघटितमित्यभिप्रायात् । न च तथापि जातित्वाद्यवच्छेद्यत्वाप्रसिद्धिः, जातिभेदनिरूपितप्रतियोगितायां जातित्वावच्छेद्यत्वस्य सत्त्वात् तद्भेदस्याप्यन्येष्वपि समवेतेषु गुणादिषु विद्यमानत्वादिति ॥ २३ ॥

प्रतियोगितयोरिति । हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितायां यत्सम्बन्धावच्छिन्नत्वं साध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायामपि तत्सम्बन्धावच्छिन्नत्वमित्यर्थः । यत्त्वतत्त्वयोरननुगमादाह, विशेषणताविशेषेति । ननु प्रतियोगीत्यादिपदादाने उप्रदर्शितातिव्याप्तिवारणं कथमित्यत आह, यत्राधिकरण इति । ननु यत्राभाव एव व्यभिचाराधिकरणं तत्र तदन्यत्वस्याभावीयविशेषणताविशेषाभावादाह, तदन्यत्वप्रकारकेति। तदन्यत्वप्रकारकं व्यभिचारित्वनिरूपकस्यतान्यत्वप्रकारकमित्यर्थः । लाघवमभिप्रेत्याह, साध्यवत्त्वेति । अनयोश्च व्यवस्थितो विकल्पः क्वचित्तदन्यत्वप्रकारकप्रमाविषयत्वं क्वचित्साध्यवत्त्वप्रकारकप्रमाविषयत्वमित्यर्थः,

साध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वाद्धेतु-
तावच्छेदकविशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदक-
त्वाच्चातिव्याप्तेरनवकाशात्। तथाच विशेषणताविशेषा-
वच्छिन्नयद्धर्म्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानव-
च्छेदकावच्छेद्यत्वं तत्सम्बन्धावच्छिन्नसाधनसमानाधि-
करणात्यन्ताभावप्रतियोगितासामान्ये नास्ति, साधने
तद्धर्म्मविशिष्टसामानाधिकरण्यं व्याप्तिरिति पर्य्य-

---

तथाच प्रमाविषयत्वनियतविशेषणताविशेष एव धर्त्तव्य इति भावः। अवच्छेदकाघटितलक्षणमभिप्रेत्य योजयति, साध्यतावच्छेदकेति। अत्र विवक्षायां साध्यतावच्छेदकसम्बन्धाप्रवेशात्तथोभयाभावानादर इत्येव निष्कृष्य दर्शयति, तथाचेति। एतेन कालो जगदाधारः कालत्वादित्यत्र साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकविशिष्टसम्बन्धी महाकाल एव, तन्निष्ठाभावतत्प्रतियोगितावच्छेदकाप्रसिद्धग्रा अवच्छेदकाघटितलक्षणेऽप्यतिव्याप्तिरिति परास्तं, विशेषणताविशेषसम्बन्धेन महाकालान्यत्वप्रकारकप्रमाविषयत्वमादाय तत्रापि सौलभ्यात्। यद्धर्म्मः साध्यतावच्छेदकधर्म्मविशेषः। तत्सम्बन्धो विशेषणताविशेषः। वह्निमान् धूमादित्यत्र धूमसमानाधिकरणाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितानवच्छेदकावच्छेद्यत्वाभावो वर्त्तत एव, सद्धेत्व-

वसितोऽर्थः। यत्र सद्धेतुविशेषे साध्यतावच्छेदकं न प्रतियोगितावच्छेदकं तत्रैवेयं रीतिरुपादेयेत्यपि वदन्ति ॥ २४ ॥

गौरवप्रतिसन्धानदशायामपि कम्बुग्रीवादिमान् नास्तीतिप्रतीतिबलात् गुरुरपि धर्म्मोऽवच्छेदकः प्रति-

---

धिकरणे शुद्धसाध्यतावच्छेदकव्यापकरूपावच्छिन्नाभावाभावात्, धूमवान् वह्नेरित्यत्र ऋदत्वप्रकारकप्रमाविषयत्वाभावप्रतियोगितायां धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वाभावादतिव्याप्तेराह, सामान्य इति। तथाच धूमत्वप्रकारकप्रमाविषयत्वत्वावच्छिन्नतादृशप्रतियोगितायां तदवच्छिन्नत्वसत्त्वान्नातिव्याप्तिरिति। यत्र सद्धेतुविशेष इति पाठः, तत्र सद्धेतुविशेषः प्रमेयवह्निसाध्यकधूमादिः। क्वचित्पुस्तके यत्रासद्धेतुविशेष इत्यादिपाठस्तिष्ठति तत्रायमर्थो बोध्यः, यत्र प्रमेयवह्नित्वेन वह्न्यादौ साध्ये शुद्धो हेतुस्तत्र तदवच्छेद्यत्वाप्रसिद्ध्या तत्साध्यकव्याप्तेरिदं लक्षणं, तदीययावद्धेतुसाधारणशब्देक्येनाक्रियमाणं तदीयासद्धेतुं न व्याप्नोतीति। अवच्छेदकत्वलक्षणाभिप्रायेण वा तदित्यपि कश्चित् ॥ २४ ॥

स्वरूपसम्बन्धरूपावच्छेदकत्वकल्पनं, सम्भवति लघौ गुरौ नास्तीति ये मन्यन्ते,तान् प्रति व्याप्तिं व्यवस्थाप्य,तदपि लघुगुरुसाधारणमिति ये वदन्ति तान् प्रत्याह, गौरवेत्यादि। न चास्था इति।

योगितायाः। न चास्यास्तत्प्रतियोगिकाभावमात्रमव-
लम्बनं तथाविधयत्किञ्चिद्व्यक्तिसत्त्व एव तादृशप्रतीते-
रनुदयात् अतएवैकघटवति भूतले कम्बुग्रीवादिमान्
नास्तीतिशब्दो न प्रमाणं प्रमाणञ्च घटसामान्यशून्ये।
नचेदेवं लघुरूपसमनियतानां गुरूणामव्याप्यतापत्तिः।
गुणादिगुणकर्म्मान्यत्वविशिष्टसत्तादिसमानाधिकरणा-

---

कम्बुग्रीवादिमान्नास्तीति प्रतीतेरित्यर्थः,तथाविधेति। यत्किञ्चित्क-
म्बुग्रीवादिमत्सत्त्वे कम्बुग्रीवादिमान्नास्तीति प्रतीतेरनुदयादित्यर्थः।
न च कम्बुग्रीवादिमान्नास्तीति कम्बुग्रीवादिमत्प्रकारकाभावप्र-
तीतौ कम्बुग्रीवादिमत्प्रकारकज्ञानस्य प्रतिबन्धकत्वादेवानुदय इति
वाच्यं, तद्धर्म्मावच्छिन्नाभाववत्त्वज्ञान एव तद्धर्म्मावच्छिन्नत्वज्ञानस्य
प्रतिबन्धकत्वात्। अन्यथा नीलघटो नास्तीति ज्ञाने सत्यपि घटो-
ऽस्तीति ज्ञानं न जायेतेति। अतएवेति। यत एव कम्बुग्रीवादि-
मत्त्वस्यावच्छेदकत्वकल्पनमित्यर्थः। कम्बुग्रीवादिमान्नास्तीति श-
ब्दस्य कम्बुग्रीवादिमत्त्वप्रकारालिङ्गिताभावविषयत्वे, तत्रापि विष-
यसत्त्वादप्रामाण्यं पारिभाषिकमापाद्येन। इदानीं गुरुधर्म्मस्यान-
वच्छेदकत्वेऽन्यदप्यनिष्टमाह, न चेदेवमिति। एतदेव विवृणोति,
गुणादीति। इदं सत्, गुणात्। गुणकर्म्मान्यत्वविशिष्टसत्त्वात्
द्रव्यत्वाद्वा इत्येतत्त्रयाणामप्यहेतुत्वं स्यादित्यर्थः। लाघवेन द्रव्य-
निष्ठाभावप्रतियोगितावच्छेदकत्वस्यैव तथावच्छेदकभेदप्रतियोगि-

भावप्रतियोगितावच्छेदकत्वनिष्ठायाः प्रतियोगिताया लाघवेन द्रव्यादिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वेनैवावच्छेदात्, तत्तदवच्छेदकत्वव्यक्तीनाञ्च प्रातिस्विकरूपेणाभावानां युगसहस्रेणापि ज्ञातुमशक्यत्वात् । एवं द्रव्यत्वत्वादिविशिष्टद्रव्यत्वादेरव्याप्यत्वप्रसङ्गोऽप्यनुसन्धेयः, उपदर्शितप्रकाराणामपि स्वत्वादिघटितत्वेन

---

तावच्छेदकत्वादित्यर्थः । नन्ववच्छेदकभेदसमुदाय एव वक्तव्य इत्यत आह, तत्तदवच्छेदकेति । ननु गुरुधर्म्मस्यानवच्छेदकत्वेऽपि उक्तमेव लक्षणं सुगममित्यत आह, उपदर्शितेति । तादृशप्रतियोगिताश्चेत्यादिना कथितप्रकारेण तत्तत्प्रतियोगिताग्रहणे दुर्ज्ञेयत्वमिति भावः । एवं पारिभाषिकावच्छेदकत्वलक्षणेऽपि स्वत्वाद्यननुगमोऽपि द्रष्टव्यः । अतएवेति यत एव घ्राणग्राह्यगुणत्वस्य गुरोरपि प्रतियोगितावच्छेदकत्वमतएवेत्यर्थः । अत्र वदन्ति, कम्बुग्रीवादिवान्नास्तीत्यत्र कम्बुग्रीवादिमत्त्वस्यावच्छेदकत्वांशे भ्रम एव, न च गौरवप्रतिसन्धानेऽपि विशेषदर्शिनां कम्बुग्रीवादिमान्नास्तीति प्रतीतिरुदयान्न तथेति वाच्यं, गौरवज्ञानं हि अवच्छेदकत्वविषयकज्ञानमात्रप्रतिबन्धकं अवच्छेदकत्वप्रकारकज्ञानप्रतिबन्धकं वा । आद्ये प्रमेयत्वप्रकारकावच्छेदकत्वज्ञानस्यापि प्रतिबन्धकत्वापत्तिः, अन्त्ये कम्बुग्रीवादिमान्नास्तीत्यत्र कम्बुग्रीवादिमत्त्वस्य सम्बन्धविधयाऽवच्छेदकत्वभ्रमेण न कापि क्षतिरिति ।

दुर्ज्ञेयत्वात्, अतोघ्राणग्राह्यगुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वं साधुसङ्गच्छत इत्यपि केचिदिति कृतं पल्लवितेन ॥ २५ ॥

इत्यनुमानदिधितौ अवच्छेदकत्वनिरुक्तिः समाप्ता ।

---

न च कम्बुग्रीवादिमान्नास्तीति शब्दस्य निरुक्तप्रामाण्याप्रामाण्यव्यवहारादेव कम्बुग्रीवादिमत्त्वस्यावच्छेदकत्वं, कल्पनीयं, तद्व्यवहारस्यान्यथाप्युपपादितत्वादिति । मैवम् अन्वयव्यतिरेकाद्यथावच्छेदकत्वप्रकारकज्ञाने गौरवज्ञानं प्रतिबन्धकं तथावच्छेदकत्वस्य सम्बन्धविषयाभानेऽपीति विनिगमनाविरहादुभयोरपि प्रतिबन्धकत्वमित्येके । अपरे तु अवच्छेदकत्वातिरिक्तधर्म्ममात्राप्रकारकावच्छेदकत्वावगाहन एव तस्य प्रतिबन्धकत्वमित्याहुः ॥ २५ ॥

इति महामहोपाध्यायकृष्णदाससार्व्वभौमप्रणीतायां अनुमानदीधितिप्रसारिण्यां अवच्छेदकनिरुक्तिः समाप्ता ।

## अथ सामान्याभावः।

### तत्त्वचिन्तामणिः।

अन्यनिष्ठवह्नेर्धूमवत्पर्व्वतवृत्त्यन्ताभावप्रतियोगित्वेऽपि तत्प्रतियोगिता न वह्नित्वेनावच्छिद्यते धूमवति वह्निर्नास्तीत्यप्रतीतेः सामान्यावच्छिन्नप्रतियोगिताकाभावः पृथगेव अन्यथा सकलप्रसिद्धरूपाभावे प्रसिद्धरूपवदन्यत्वे चावगते वायौ रूपं न वा, वायू रूपवान्नवेति संशयो न स्यात् विशेषाभावकूटस्य निश्चितत्वात् ॥१॥

इति तत्त्वचिन्तामणौ सामान्याभावव्यवस्थापणं समाप्तम्।

---

### दीधितिः।

ननु य एव मिलिता वह्न्यभावाः। जलह्रदादौ वह्निर्नास्तीतिधियं जनयन्ति, त एव प्रत्येकं धूमवति महानसादौ वर्त्तन्ते, तत्र च तेषां स्वस्वावच्छेदकतत्त-

---

### प्रसारिणी।

व्याप्तिलक्षणानन्तरं सामान्याभावस्य पृथगेवेति ग्रन्थस्यावतारार्थमाह, ननु य एवेति। सामान्याभावास्वीकर्तृमते चालनीन्यायेन धूमाधिकरणे वर्त्तमानास्तत्तदभावा एव जलह्रदाद्यैकाधिकरण्यापन्नाः वह्निर्नास्तीति धियं जनयन्तीति, तदादायाऽव्याप्ति-

द्वह्नित्वावच्छिन्नवैयधिकरण्यनिरूपिका याः प्रतियोगितास्तदवच्छेदकमेव वह्नित्वमतोऽव्याप्तिः। न चैवं वह्नित्वावच्छिन्नस्य तद्वृत्तित्वान्न तथात्वं, तथा सति ह्रदवृत्तिधूमाभावप्रतियोगितावच्छेदकह्रदावृत्तित्वावच्छिन्नस्य वह्निमदयोगोलकवृत्तित्वादतिव्याप्तेः ॥ १ ॥

अथानुगतं रूपं तत्तदभावप्रतियोगितानां नावच्छेदकम्, अनवच्छेदकमेव तर्ह्यभावप्रतियोगितायाः

---

रित्यर्थः। प्रतियोगिवैयधिकरण्यं सङ्गमयन्नाह, तत्र चेति। स्वंप्रतियोगिता। ननु तत्तद्वह्न्यभावप्रतियोगितायाः यथा तत्तद्वह्नित्वम् अवच्छेदकं, तथा तस्या एव मिलनापन्नाया वह्नित्वमपि प्रतियोगितावच्छेदकं, तथाच तत्तत्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमेव हेतुमतो नास्तीत्याह, न चैवमिति। तथा सतीत्यादि। जलह्रदे ह्रदावृत्तिर्नास्तीति बुद्धिर्यावत्तत्तद्ध्रदावृत्तिव्यक्तिप्रतियोगिकाभावविषया तत्तद्धूमा अपि तन्मध्यपतितास्तथाच तत्तद्धूमाभावप्रतियोगितावच्छेदकं ह्रदावृत्तित्वं, ह्रदावृत्तित्वावच्छिन्नं चायोगोलकत्वादिकं वह्निमति वर्त्तत एव, तथाच तत्तद्धूमाभावकूटस्यापि स्वप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणत्वादतिव्याप्तिः ॥ १ ॥

एतद्भीत्या चेदिदमनुगतं रूपं नावच्छेदकं, तर्हि सम्मुखत एव तत्तद्धूमाभावप्रतियोगिताया अतिरिक्तवृत्तित्वाद्धूमत्वमनव-

अभावान्तरे मानाभावात्। तथाच तद्रूपावच्छिन्न-साध्यके व्यभिचारिण्यतिव्याप्तिरत आह, सामान्येति। संशयान्यथानुपपत्तिं प्रमाणयति, अन्यथेति। वाया-

---

च्छेदकमेवेत्यतिव्याप्तिरित्याह, अथेत्यादिना। ननु कथं पूर्व्व-कल्पेऽतिव्याप्तिः उक्तयुक्त्या प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः। न च गोत्वाभाव एव तथा। तत्राप्युक्तयुक्त्या ह्रदावृत्तित्वस्य प्रतियोगितावच्छेदकत्वात्। न च ह्रदत्वाभाव एव तथा। तत्राप्युक्तयुक्त्या घटावृत्तित्वादेः प्रतियोगितावच्छेदकत्वात् तदवच्छिन्नस्यायोगोलकवृत्तित्वाच्च। न चायोगोलोकवृत्तिरूप-स्वरूपाभावस्तथा। तत्क्षणीयायोगोलकावृत्तिर्नास्तीतिप्रतीते-स्तद्रूपाभावस्यापि तत्क्षणीयायोगोलकावृत्तित्वेन रूपस्वरूपा-भावस्यापि स्वप्रतियोगितावच्छेदकतत्क्षणीयायोगोलोकावृत्ति-त्वावच्छिन्नक्षणान्तरतद्वृत्तिसमानाधिकरणत्वात्। एवमन्यद-प्यूह्यम्। अत्र केचित् अतिव्याप्तिपदमसम्भवपरम्। परे तु आकाशाभाव एव तादृशः। न च ह्रदावृत्तिमध्यपतिताकाशाद्य-भावोऽपि तथा। यस्य ह्रदावृत्तेरभावाभावेन तथा बुद्धाभाव-स्तदभावस्यैव तथात्वं कल्प्यत इत्याकाशाभावातिरिक्तानामेव तत्प्रतियोगितावच्छेदकमिति। न चैवं ह्रदान्यत्वाभावस्यैव प्रति-योगितावच्छेदकं ह्रदावृत्तित्वं, न तु धूमाद्यभावस्येति वाच्यं, तथापि धूमायोगोलकवृत्तियत्किञ्चिदन्यतरत्वाद्यवच्छिन्नाभावस्यैत-द्वादिमते तत्तदभावरूपत्वाद्धूमाभावस्याप्यन्यतरत्वं प्रतियोगिता-

विति। यद्यप्ययं संशयो न वायुविशेष्यकः तस्य विशेषणत्वेनोल्लेखात्, न वा रूपविशेष्यकः तथा सति रूपतदभावयोर्विरोधिनोरेककोटितायां प्रकृतानुपयोगप्रसङ्गात्, तथापि वायू रूपवान् तदभाववान् वेति रूपतदभावकोटिकसंशये तात्पर्य्यम्। अन्त्यस्तु रूपवत्तदन्योन्याभावकोटिक इति नाभेद इति सम्प्रदायविदः।

---

वच्छेदकमिति एवं संयोगावच्छिन्नगुणाद्यभावमादायापि बोध्यम्। उल्लेखादितिसप्तम्यन्तेनोल्लेखादिति भावः। तथा सतीति। विशेषणस्यैव कोटित्वादित्यर्थः। प्रकृतेति। तावद्रूपाभावनिर्णयं वर्णयतो मूलकारस्य रूपसामान्याभावव्यवस्थापने तात्पर्य्यं, तच्च रूपाभावकोटिकसंशयमादायैव निर्व्वहतीति भावः। तथापीत्यादि। रूपरूपाभावकोटिको वायुविशेष्यकः संशयोऽनुभवसिद्धतया दुरवह्नवः। तस्य च शब्दान्तराभावादस्यैव शब्दस्य तत्र तात्पर्य्यम्। शब्दसन्दर्भमेव सम्प्रदायवित्त्वेनोह्वाद्य शब्दसन्दर्भमेव व्यवस्थापयति विरुद्धयोरित्यादिना, नव्या इत्यन्तेन। तथाच वायौ रूपं नवेत्यस्य रूपं विशेष्यमेव, न वेत्यत्र नञर्थोऽभावोऽपरो विशेष्यः उभयत्रैव वायुवृत्तित्वमन्वितमिति भावः। यद्यप्यत्रापि सप्तम्यर्थो वृत्तित्वमेव विशेषणमिति वायुविशेषणक इत्यसम्मतं, तथापि तस्य परम्परया विशेषणत्वे तात्पर्य्यमिति भावः। अन्वयव्यतिरेकाभ्यां भिन्नप्रकारकनिर्णयस्य संशयप्रतिबन्ध-

विरुद्धयोरेकधर्म्मिकसंसर्गावगाहिज्ञानमेव संशयो न तु तदुभयप्रकारतापि नियता, तथाच रूपतदभाव-विशेष्यको वायुविशेषणकोऽसाविति तु नव्याः। वायु-वृत्तित्वतदभावकोटिको रूपधर्म्मिक एवायं संशयः, अधिकरणे तत्तदभावान्यतरनिश्चयस्यापि तत्राधिकर-णवृत्तित्वसंशयविरोधित्वात्, अन्यथा भूतले घटतद-भावान्यतरनिर्णयेऽपि घटो भूतलवृत्तिर्न वेति संशय-प्रसङ्गादित्यपरे। अथैतावन्त्येव रूपाणीत्यनिर्णयात् यावद्रूपाभावानिर्णये संशयो न विरुध्यत इति चेत्, यावद्रूपाभावानिर्णय इत्यस्य यावन्तो रूपाभावास्तेषां

---

कत्वमभिप्रेत्यपरेषां मतम् आह, अधिकरण इति। अत्र च न वेत्यत्र भावेन समं वृत्तित्वस्यैवान्वयः। तथाच वृत्तित्ववृत्तित्वा-भावकोटिको रूपविशेष्यक एव संशयः मूलोक्तविशेषाभावनिर्ण-यस्य स्वातन्त्र्येण प्रतिबन्धकत्वमभिप्रेत्यावतार इति स्वातन्त्र्येण प्रतिबन्धकत्वमेव व्यवस्थापयति, अन्यथेति। अत्र चणविलम्बादिना-प्यन्वयव्यतिरेकावन्यथासिद्धावित्यस्वरसो बोध्यः। रूपवृत्तियावत्त्वा-वच्छिन्नाभावानां रूपाभावानामेव यावतां वस्तुतोऽनिर्णयः, वस्तुतो यावन्ति रूपाणि तावदभावानाम्। यावद्रूपत्वेन तदभावानामिति चत्वारः कल्पाः तथेति। वस्तुतो यावन्तोऽभावा यावन्ति च रूपाणि तेषां तदभावानाञ्च निर्णयः प्रकृते वर्त्तत एवेति भावः, योग्यानुप-

यावत्त्वेन रूपेण तेषां यावन्ति रूपाणि तावदभावानां यावद्रूपत्वेन तदभावानां वा अनिर्णय इत्यर्थः। न प्रथमतृतीयौ तथानिर्णीतत्वात्, नेतरौ प्रतियोगितदभावयोर्यावत्त्वानुल्लेखेऽपि योग्यानुपलब्ध्या भूतले घटो नास्तीति निश्चयमात्रादेव घटतदभावसंशयोच्छेददर्शनेन तस्याकिञ्चित्करत्वात्। न चातिरिक्तसम्भावनाविरहसहकृत एवाभावनिश्चयस्तत्प्रतिबन्धकः, सम्भावना च, रूपं पार्थिवादित्रितयभिन्नं न वेत्याकारा निवर्त्तते चेयं रूपत्वावच्छेदेनैतत्त्रितयभिन्नत्वाभावनिश्चयादेवेति वाच्यं, गौरवात्, विनापि अतिरिक्तसम्भावनां विशेषाभावनिश्चये सामान्यसंशयदर्शनाच्च ॥ २ ॥

---

लब्धेरिति। यावत्वानुल्लेखस्फोरणार्थम्। तथा निश्चयस्य प्रतिबन्धकत्वेऽपि सम्भावनाया उत्तेजकत्वं प्रसज्य निराकरोति, न वेत्यादि, रूपत्वावच्छेदेनेति। तथाच स्वरूपत्वस्य भिन्नत्वाभावावच्छेदकतया व्यावर्त्तकत्वात्तन्निर्युक्तिवेति भावः। नन्वयव्यतिरेकाभ्यां तथा गौरवमप्यास्थेयमित्यत आह, विनेति। तथाच प्रकृतेऽतिरिक्तसम्भावनां विनापि विशेषाभावनिर्णये सामान्यसंशयोऽनुभवसिद्ध इति भावः ॥ २ ॥

अथाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वनिश्चय एव तादृशसंशयविरोधी, अन्यथा तत्राप्यतिप्रसङ्गात्, स च न प्रकृते, अभावस्य च यावद्विशेषाभावाधिकरण-वृत्तित्वेन विशिष्टस्य तदवच्छेदेन वा सामान्यावच्छिन्न-प्रतियोगिताकत्वं, सम्भवति चेदं, तादृशाभावप्रति-योगिताया अतिरिक्तत्वात्, तेन नैकविशेषवतो विशेषा-

---

यद्गपति दूषणमुद्घाटयति अथेत्यादिना। अतिप्रसङ्गादिति, तद्धर्मिकनिश्चयमात्रस्यैव प्रतिबन्धकत्वे प्रमेयत्वादिना तथा निश्चये-ऽपि प्रतिबन्धः स्यादिति भावः। स चेति। सामान्यावच्छिन्न-प्रवियोगिताकत्वनिश्चय इत्यर्थः। ननु यावद्विशेषाभावानामेव सामान्यावच्छिन्नप्रतियोगिताकत्वे मिलितघटद्वयवति घटो ना-स्तीतिप्रतीतिप्रसङ्ग इत्यत आह, अभावस्य चेति। ननु तत्त-दधिकरणवृत्तित्वविशिष्टानामेव तेषां सामान्यावच्छिन्नप्रति-योगिताकत्वे नञर्थ एव भावोऽभावश्चेति भावाभावकरं हि तत्वमित्यत आह, तदवच्छेदेन वेति। यावद्विशेषाभावा-धिकरणवृत्तित्वावच्छेदेनेत्यर्थः। तथाच सामान्यावच्छिन्नप्रति-योगिताकत्वं व्यासज्यवृत्तीति नोक्तदोष इति भावः। ननु या विशेषाभावप्रतियोगिता सैव चेत् सामान्यावच्छिन्ना, तदा विशेषा-न्तरवत्यपि सामान्यावच्छिन्नप्रतियोगिताकाभावो वृत्तौ एवेत्यत आह, सम्भवति चेति। तथाच विलक्षणप्रतियोगिताकत्वं तत्तद-

न्तराभाववत्त्वेन सामान्याभाववत्त्वप्रसङ्गः। न च प्रतियोगितावच्छेदकभेदस्याभावभेदनियामकतया भेदसिद्धिः, प्रतियोगिभेदस्य तत्त्वे एकघटप्रतियोगिकस्य प्रागभावादिचतुष्कस्याभेदप्रसङ्गात्, अवच्छेदकन्तु भिद्यत एव, तत्र क्वचित्तादात्म्यस्य क्वचित्संसर्गस्य क्वचित्पूर्व्वापरकालीनतद्घटत्वादेश्च तथात्वादिति वाच्यं, संसर्गप्रतियोगिविशेषणसाधारणस्यैकस्यावच्छेदकत्वस्य दुर्व्वचत्वात्, पूर्व्वापरकालीनत्वादेर्ध्वंसादिप्रतियोगितावच्छेदकत्वे मानाभावाच्च। किञ्च अवच्छेदकभेदस्या-

---

धिकरणावच्छेदेनेति भावः। इदमेव स्फुटयति तेनेति। मिश्रमतमाशङ्क्य निराकरोति। न चेति। तत्त्व इति। अभावभेदनियामकत्व इत्यर्थः, अवच्छेदकन्त्विति। अत्रावच्छेदकत्वं संसर्गप्रतियोगिविशेषणसाधारणमेव वक्तव्यं, तेन घटो ध्वस्त इत्यादिप्रतीतौ पूर्व्वकालीनत्वादेः प्रकारत्वोपवर्णनं परास्तमिति। ननु प्रतियोगिविशेषणमेवावच्छेदकं वक्तव्यम् इत्यत आह, पूर्व्वापरकालीनत्वादेरिति। अथ सम्बन्धप्रतियोगिविशेषणसाधारणव्यवहारादेवावच्छेदकत्वमेकं वाच्यं, तच्चातिरिक्तमनतिरिक्तं वेत्यन्यदेतत्, घटो ध्वस्त इत्यादिप्रतीतौ तु पूर्व्वापरकालीनत्वादेः प्रकारतया सम्बन्धविधया वा अवच्छेदकत्वं वक्तव्यम्, उत्तरकालं तथा सन्देहाभावादित्यत आह, किञ्चेति। अत्यन्ताभावादीति। स्वरूपभेदमभिप्रेत्य चैतत्।

भावभेदनियामकत्वं न तज्जनकत्वम्, अत्यन्ताभावादिस्वरूपस्य तस्याजन्यत्वात्। नापि तद्व्याप्यत्वं, वैयधिकरण्यात्, अतएव न तद्व्यापकत्वमपि, अभेदेऽप्यविरोधाच्च। न च तदितरधर्म्मावच्छिन्नप्रतियोगिताकत्वं तदवच्छिन्नप्रतियोगिताकान्यत्वस्य व्याप्यं, मानाभावात्। अतएव च समनियतसुखदुःखादितत्तत्संख्यापरिमाणव्यक्त्यादिनानाधर्म्मावच्छिन्नोऽप्यभिन्न एवाभावः, भेद-

---

नापीत्यादि। यत्र प्रतियोगितावच्छेदकभेदस्तत्राभावभेद इत्याकारकमित्यर्थः। वैयधिकरण्यादिति। इदमपि स्वरूपभेदमभिप्रेत्य। अन्योन्याभावाभिप्राये तु घटादावेव सामानाधिकरण्यं सुलभमिति। अतएव, वैयधिकरण्यादेव। व्यापकत्वपक्षे दूषणान्तरमाह, अभेद इति। अभावैक्य इत्यर्थः। तथाचात्राभावैक्येऽपि यत्राभावभेदस्तत्रप्रतियोगितावच्छेदकभेदः सिद्ध्यत्विति भावः। वैयधिकरण्यादिकमुद्धृत्य दूषयति न चेत्यादि। तथाच रूपत्वावच्छिन्न-प्रतियोगिताकोऽभावस्तद्रूपत्वावच्छिन्नप्रतियोगिताकाद्भिद्यते। तदतिरिक्तधर्म्मावच्छिन्नप्रतियोगिताकत्वात्। घटाभाववदिति मानमुन्नेयम् अत्राप्रयोजकत्वमाह, मानाभावादिति। अतएवेति। यत एव प्रतियोगितावच्छेदकभेदेऽपि अभावाभेद इत्यर्थः। सुखदुःखाभावयोरैक्ये दुःखकाले सुखाभावसत्त्वादिदानीं दुःखं नास्तीति ज्ञानापत्तिरित्यत आह, संख्येति। एकत्वमित्यर्थः।

सिद्धिस्तु भाववदभावस्यापि विरुद्धधर्म्माध्यासादेव, अत-एव गगनादीनामवृत्तीनां समनियतानां वा धर्म्माणा-मेक एवात्यन्ताभावः, युगपदुत्पन्नविनष्टानां समान-देशानामसति बाधके एक एव ध्वंसः प्रागभावो वेति ॥ ३ ॥

व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकोऽपि चेद-भावः प्रामाणिकस्तदा तस्यैकस्यैव प्रतियोगिताः सर्व्वैरेव

---

द्वित्वादिनामव्याप्यवृत्तित्वादितिभावः। तर्ह्यभावभेदकं किमस्तीत्यत आह, भेदसिद्धिरिति। अभाव इति शेषः। अभावे विरुद्धो धर्म्मः अत्यन्ताभावे प्रतियोगिवृत्त्यभावत्वम्। अन्योन्याभावे प्रतियोग्य-वृत्तित्वे सति सदातनाभावत्वम्। प्रागभावे तज्जनकाभावत्वं ध्वंसे तज्जन्याभावत्वम्। अवृत्त्यभावस्य प्रत्यक्षाभावादाह, समनिय-तानामिति। नियमश्च देशतः कालतश्चेति, तेन न पूर्व्वोक्ते वैषम्यम्, असति बाधक इति। शाखामूलावच्छिन्नाकाशसंयोगयोर्युगपदुत्प-न्नसमदेशयोरपि एकस्मिन् ध्वंसे प्रागभावे वा परस्परानवच्छेदेऽपि तादृशप्रत्ययप्रसङ्गो बाधक इत्यर्थः। केचित्तु पाकजानामेकस्मिन् ध्वंसे प्रागभावे वा तेषामभेदापत्तिः इतरकारणस्य तुल्यत्वात्, कार्य्यभेदस्य च कारणभेदनियम्यत्वादित्याहुः॥ ३ ॥

समनियताभावानामैक्यमभिप्रेत्याह, आकाशाभाव एव वेति। तत्तदिति। सामान्याभावावच्छेदककालदेश इत्यर्थः तेन शाखाकृ-

| | Rs. | |
|---|---|---|
| *Markandeya Purana, Fasc. 5-7 @ /10/ each | 1 | 14 |
| *Mimāṁsā Darçana, Fasc. 10-19 @ /10/ each | 6 | 4 |
| *Nyāyavārtika, Fasc. 1--6 @ /10/ each | 3 | 12 |
| *Nirukta, Vol. IV. fasc. 1-8 @ /10/ each | 5 | 0 |
| *Nitisara, Fasc. 3-5 @ /10/ each | 1 | 14 |
| Nityācārapaddhatiḥ, Fasc. 1--7 @ /10/ each | 4 | 6 |
| Nityācārapradīpaḥ Vol. I. Fasc. 1--8 ; Vol. II, Fasc. 1-3. @ /10/ each | 6 | 14 |
| Nyayabinduṭīkā, Fasc. 1 @ /10/ each | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2--6 ; Vol. II, Fasc. 1--3 @ /10/ each | 5 | 0 |
| Nyayasarah | 2 | 0 |
| Padumawati, Fasc. 1--5 @ 2/ | 10 | 0 |
| *Pariçiṣṭa Parvan, Fasc. 3--5 @ /10/ each | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each | 4 | 6 |
| Prithivirāj Rāsa. Part II, Fasc. 1--5 @ /10/ each | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- | 1 | 0 |
| Prākrta Lakṣaṇam Fasc. 1 @ 1/8/ each | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1--6 ; Vol III, Fasc. 1--6 @ /10/ each | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| Pariksamukha Sutram | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each | 3 | 12 |
| Rasarnavam, Fasc. 1-3 | 3 | 12 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each | 1 | 4 |
| Samaraieca Kaha Fasc. 1-3, @ /10/ | 1 | 14 |
| Sāṇkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each | 3 | 0 |
| *Sankara Vijaya, Fasc. 2-3 @ /10/ each | 1 | 4 |
| Six Buddhist Nyaya Tracts. | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each | 3 | 12 |
| Sragdharā Stotra ( Sanskrit and Tibetan ) | 2 | 0 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each | 1 | 0 |
| Suddhikaumudī, Fasc 1-4 @ /10/ each | 2 | 8 |
| Sundaranandam Kavyam | 1 | 0 |
| Suryya Siddhanta fasc. 1 | 1 | 4 |
| Syainika Sastra | 1 | 0 |
| *Taittreya Brahmana, Fasc. 11-25 @ /10/ each | 9 | 6 |
| ,, Pratisakhya, Fasc. 1-3 @ /10/ each | 1 | 4 |
| *Taitterīya Saṁhitā, Fasc. 27-45 @ /10/ each | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc. 10-19 @ /10/ each | 6 | 14 |
| Tantra Vārteka (English) Fasc. 1-8 @ 1/4/ each | 10 | 0 |
| *Tattva Cintāmaṇi, Vol. I, Fasc. 1-9, Vol II, Fasc. 1-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1--5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each | 24 | 6 |
| Tattva Cintamani Didhiti Vivriti, Fasc. 1, @ /10/ each | 0 | 10 |
| Ditto Prakas, fasc. 1-2, @ /10/ each | 1 | 4 |
| Tattvārthadhigama Sutram, Fasc. 1-3 @ /10/ each | 1 | 14 |
| Tirthacintamoni, fasc, 1, @ /10/ each | 0 | 10 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each | 1 | 14 |
| Tul'si Satsai, Fasc. 1--5 @ /10/ each | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5-13 @ /10/ each | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3--6 ; Vol. II, Fasc. 1--7, @ /10/ each | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1-8 Vol- II. Fasc. 1 @ /10/ each | 5 | 10 |
| Ditto Vol. II, Fasc. 2-4 @ 1/4/ | 3 | 12 |
| Vivādaratnākara, Fasc. 1--7 @ /10/ each | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each | 1 | 14 |
| Yogasāstra of Hemchandra Vol. I. Fasc. 1-3 | 3 | 12 |
| *Tibetan Series.* | | |
| Baudhyastotrasangraha, Vol. I ( Tib. & Sans. ) | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 | 1 | 0 |
| Pag-Sam S'hi Tiñ, Fasc. 1--4 @ 1/- each | 4 | 0 |
| Rtogs *brjod d*pag *h*khri S'iñ ( Tib. & Sans. Avadāña Kalpala Vol. I, Fasc. 1--8 ; Vol. II. Fasc. 1--7 @ 1/- each | 15 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc 1-6, @ 1/ each | 14 | 0 |
| *Arabic and Persian Series.* | | |
| *Alamgirnāmah, with Index, (Text) Fasc. 1--13 @ /10/ each | 8 | 2 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1--4 @ 1/- each | 4 | 0 |
| Akbarnāmah, with Index, Fasc. 1--37 @ 1/8/ each | 55 | 8 |

*The other Fasciculi of these works are out of stock and complete copies cannot be supplied.

| Title | Rs. | As. |
|---|---|---|
| Āīn-l-Akbarī, Fasc. 1-22 @ 1/8/ each ... ... ... ... | 33 | 0 |
| Ditto (English) Vol. 1, Fasc. 1--7, Vol. II, Fasc. 1--5, Vol. III, ... | 36 | 0 |
| Ditto (English) Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1-7 Vol 3 @ 1/4/ each | 20 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger, @ /10/ .. ... ... | 0 | 10 |
| *Bādshāhnāmah, with Index, Fasc. 1--19 @ /10/ each ... ... | 11 | 14 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each ... ... Rs. | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each ... ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1--3 @ 1/ each ... ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each | 31 | 8 |
| Farnang-i-Rashīdī, Fasc. 1--14 @ 1/8/ each ... ... ... | 21 | 0 |
| Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, Fasc. 1--4 @ 1/- each ... | 4 | 0 |
| Futūḥ-ush-Shām of Wāqidī, Fasc. 1--9 @ /10/ each ... ... | 5 | 10 |
| Ditto of Āzādi, Fasc. 1--4 @ /10/ each ... ... ... | 2 | 8 |
| History of Gujarat ... ... ... ... ... | 1 | 0 |
| Haft Asmān, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... | 0 | 12 |
| Hisātory of the Caliphs, (English) Fasc. 1--6 @ 1/4/ each ... ... | 7 | 8 |
| Iqālnamah-i-Jahāngīrī, Fasc. 1--3 @ /10/ each ... ... ... | 1 | 14 |
| Iṣābah, with Supplement, 51 Fasc. @ 1/- each ... ... ... | 51 | 0 |
| Ma'ṣāir-i- Ālamgīrī, Fasc. 1--6 @ /10/ each ... ... | 3 | 12 |
| Maa'āṣir-ul-Umarā, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--9 ; Vol. III, 1-10 ; Index to Vol. I, Fasc. 10-11 ; Index to Vol. II, Fasc. 10-12 ; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... ... | 35 | 0 |
| Maghāzi of Wāqidī, Fasc. 1--5 @ /10/ each ... ... ... | 3 | 2 |
| Marhamu 'L-Ilali 'L-Mu'Dila ... ... ... ... | 1 | 0 |
| Muntakhabu-t-Tawārikh, Fasc. 1--15 @ /10/ each ... ... ... | 9 | 6 |
| Ditto ( English ) Vol. I, Fasc. 1--7 ; Vol. II, Fasc. 1--5 and 3 Indexes ; Vol. III, Fasc 1 @ 1/ each ... ... ... | 16 | 0 |
| Muntakhabu-l-Lubāb, Fasc. 1- 19 @ /10/ each ... ... ... | 11 | 14 |
| Ditto Part 3, Fasc. 1 ... ... ... ... | 1 | 0 |
| Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... ... | 0 | 10 |
| Niẓāmi's Khiradnāmah-i-Iskandari, Fasc. 1--2 @ /12/ each ... ... | 1 | 8 |
| Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col. D. C. Phillott ... ... | 5 | 0 |
| Riyāzu-s-Salātīn, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1--5 @ 1/ ... ... ... | 5 | 0 |
| Tadhkira-i-khushnavīsān ... ... ... ... ... | 1 | 0 |
| Tabaquāt-i-Nāṣiri, ( English ), Fasc. 1-14 @ 1/- each ... ... | 14 | 0 |
| Ditto Index ... ... ... ... ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni Fasc. 1--7 @ /10/ each .. | 4 | 6 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāi Aif. Fasc. 1--6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1--2 @ 1/8/ each ... ... ... | 3 | 0 |
| Tuzuk-i-Jahāngirī, (Eng) Fasc. 1 @ 1/ ... ... ... ... | 1 | 0 |
| Wis-o-Rāmin, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| Zafarnāmah, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--8 @ /10/ each ... ... | 10 | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. XIX and XX @ 10/ each ... ... 20
2. Proceedings of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10, 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos. in each Volume.*

4. Journal and Proceedings, N. S., 1905, to date, (Nos. 1-4 of 1905 are out of stock ), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910, ... 8 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I--III, with 8 coloured Plates, 4to. @ 6/ each .. ... 18 0
9. Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... .. ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi, and edited with notes by Major D. C. Phillott. ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each .. ... 34 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c. must be made payable to the "Treasurer Asiatic Society," only.

**Books are supplied by V. P. P.** 21-12-11.

BIBLIOTHECA INDICA

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES No. 1334.

# अनुमान-दीधिति-प्रसारिणी




# ANUMANA DĪDHITI PRASĀRINI

BY

KRISHNA DAS SARVABHAUMA

WITH TATTVACINTAMANI AND DIDHITI

EDITED BY

PANDIT PRASANNA KUMAR TARKANIDHI

*Professor, Sanskrit College*

FASCICULAS III.

Calcutta:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS.

No. 5, Nandakumar Chawdhury's 2nd Lane.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1 PARK STREET.

1912.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR BERNARD QUARITCH,
11, GRAFTON STREET, NEW BOND STREET, LONDON, W, AND MR OTT
HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk cannot be supplied —some of the Fasciculi being out of stock*

## BIBLIOTHECA INDICA.

*Sanskrit Series*

| | |
|---|---|
| *Advaita Brahma Siddhi, Fasc 2, 4 @ /10/ each .. . | Rs. 1 |
| Advaitachintā Kaustubha, Fasc 1-3 @ /10/ each ... .. | 1 |
| *Agni Purāna, Fasc 6-14 @ /10/ each | 5 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc 1-5 ; Vol II, Fasc 1-5 ; Vol III, Fasc. 1-5, Vol IV, Fasc 1-8 @ /10/ each . | 14 |
| Aiterēya Lochana. ... ... .. | 2 |
| *Aṇu Bhāṣhya, Fasc 2-5 @ /10/ each .. | 2 |
| Aphorisms of Sāṇḍilya, (English) Fasc 1 @ 1/- | 1 |
| Aṣtasāhasrikā Prajñāpāramitā, Fasc 1-6 @ /10/ each . | 3 |
| *Atharvana Upanishad, Fasc 4 5 @ /10/ each ... | 1 |
| Atmatattaviveka, Fasc. I. @ /10/ each .. ... .. | 0 |
| Açvavaidyaka, Fasc 1-5 @ /10/ each . | 3 |
| Avadāna Kalpalatā, (Sans and Tibetan) Vol. I, Fasc. 1-7 ; Vol. II Fasc. 1-7 @ 1/ each . .. ... .. | 15 |
| Bālam Bhaṭṭī, Vol I, Fasc. 1-2, Vol 2, Fasc. 1 @ /10/ each ... | 1 |
| Baudhāyana S'rauta Sūtra, Fasc 1-3 Vol. II, Fasc 1-3 @ /10/ each .. | 3 |
| *Bhāmatī, Fasc 4-8 @ /10/ each . | 3 |
| Bhāṭṭa Dīpikā Vol I, Fasc. 1-6 , Vol 2, Fasc. 1, @ /10 each ... | 4 |
| Baudhyostatrasangraha .. .. . ... | 2 |
| Bṛhaddēvatā Fasc 1-4 @ /10/ each .. .. . | 2 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each . ... .. | 3 |
| Bodhiçaryāvatāra of Çāntideva, Fasc. 1-5 @ /10/ each .. . . | 3 |
| Cri Cantinatha Charita, Fasc 1-3 .. ... | 1 |
| Çatadusaṇī, Fasc 1-2 @ /10/ each | 1 |
| Catalogue of Sanskrit Books and MSS , Fasc 1-4 @ 2/ each . | 8 |
| Çatapatha Brāhmaṇa, Vol I, Fasc 1-7, Vol II, Fasc I-5, Vol III, Fasc 1-7 Vol 5, Fasc. 1 4 @ /10/ each | 14 |
| Ditto Vol 6, Fasc 1-3 @ 1/4/ each ... . .. | 3 |
| Ditto Vol VII, Fasc 1-5 @ /10/ | 3 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc 1-14 @ /10/ each | 8 |
| *Caturvarga Chintāmaṇi, Vol II, Fasc 1-25 , Vol III Part I, Fasc 1-18 Part II, Fasc 1-10 Vol IV Fasc 1-6 @ /10/ each | 36 |
| Ditto Vol 4, Fasc. 7-8, @ 1/4/ each . | 2 |
| Ditto Vol. IV, Fasc. 8 9 @ /10/ .. | 1 |
| Çlockavartika, (English) Fasc 1-7 @ 1/4/ each . .. | 8 |
| *Çrauta Sūtra of Āpastamba, Fasc. 12-17 @ /10/ each . . ... | 3 |
| Ditto Çānkhāyana, Vol. I, Fasc. 1-7; Vol II, Fasc 1-4, Vol III, Fasc. 1-4 ; Vol 4, Fasc. 1 @ /10/ each . .. | 10 |
| Çri Bhāshyam, Fasc 1-3 @ /10/ each .. .. ... | 1 |
| Dāna Kriyā kaumudī, Fasc 1-2 @ /10/ each ... | 1 |
| Gadadhara Paddhati Kālasāra Vol I, Fasc 1-7 @ /10/ each .. .. | 4 |
| Ditto Ācharasārah Vol. II, Fasc. 1-4 @ /10/ each .. .. | 3 |
| Gobhiliya Grihya Sutra, Vol I. @ /10/ each . . . | 3 |
| Ditto Vol II. Fasc. -2 @ 1/4/ each .. ... | 2 |
| Ditto (Appendix) Gobhila Parisista ... ... ... | 2 |
| Ditto Grihya Sangraha ... .. . . . | 0 |
| Haralata .. . .. .. . . . | 1 |
| Karmapradiph, Fasc. I ... . . . ... ... | 1 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... .. . . ... | 4 |
| Kātantra, Fasc 1-6 @ /12/ each .. . ... ... | 4 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ 1/4/ each .. ... | 17 |
| Kūrma Purāṇa, Fasc 8-9 @ /10/ each ... ... .. ... | 4 |
| Lalita Vistara, ( English ) Fasc 1-3 @ 1/- each ... ... ... | 3 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... .. .. | 6 |
| Mahā-bhāṣya-pradīpōdyōta, Vol. I, Fasc. 1-9 ; Vol. II, Fasc 1-12 Vol III, Fasc 1-10 @ /10/ each ... ... ... ... ... | 19 |
| Ditto Vol IV, fasc. 1 @ 1/4 ... .. ... | 1 |
| Manutikā Sangraha, Fasc. 1-3 @ /10/ each .. ... ... | 1 |

व्यधिकरणैर्धर्म्मैः सर्व्वैश्च समानासमानाधिकरणैः सम्बन्धैरवच्छिद्यन्ताम्, आकाशाभाव एव वा तथास्तामिति। नैवम् एवं हि तत्तद्देशकालावच्छिन्नानवच्छिन्नतत्तदधिकरणवृत्तित्वेन विशिष्टस्य तत्तदवच्छेदेन वा एकस्यैवाभावस्य घटपटगोत्वाश्वत्वादिप्रतियोगिताकत्वसम्भवेन तत्तद्भेदोऽपि विलुप्येत। तत्तत्प्रतियोगिकत्वं तत्तत्स्वभावो न च तत्ताधिकरणवृत्तित्वस्यान्तर्भावोऽवच्छेदकत्वञ्चेति समानम्। अतएव सामान्या-

---

पकालयोः संयोगरूपात्यन्ताभाववारणम्। अभावावच्छेदकानामानन्त्यात् प्रतियोगिन एव तद्वाच्यमित्याह, अनवच्छिन्नेति। यद्वा स्वावच्छेदकानवच्छेदकयोरल्पत्वानल्पत्वाभ्यां लाघवान्मतभेदः, तथाच स्वावच्छेदकदेशकालयोरल्पत्वं तत्र तदवच्छिन्नत्वमधिकरणस्य वक्तव्यं यत्र त्वनवच्छेदकयोरल्पत्वं तत्र स्वानवच्छेदकावच्छिन्नत्वमधिकरणस्य वक्तव्यम् वृत्तित्वविशिष्टे एवमुत्पत्तिकालावच्छिन्नपर्य्याप्तवृत्तित्वविशिष्टे वह्नित्वावच्छिन्नप्रतियोगिताकत्वमिति वाच्यं व्याप्यवृत्तिगोत्वाभावादौ घटादिवृत्तित्वविशिष्टे गोत्वत्वाद्यवच्छिन्नप्रतियोगिताकत्वमिति। अतएव घटपटगोत्वाश्वत्वेत्यादि यथा संख्येन वक्ष्यति, विशिष्टस्य तत्त्वे भावाभावकरंवितत्वादनुभवविरोध इत्यत आह, तदवच्छेदेनेति। कल्पद्वयं निषेधयति अन्तर्भाव इत्यादि। एतत्कल्पत्वमुभयतोऽपि परिष्कृतं दूषयति, अतएवेति। यत एव तत्-

वच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्तीत्यपि प्रत्युक्तम्, अव्यासज्यवृत्तेस्तत्स्वभावस्य तत्तानुपपत्तेरतिरिक्तकल्पने च किमपराद्धमतिरिक्ताभावेन ।

किञ्च व्यधिकरणयोर्घटपटयोर्द्वित्वप्रतीतिवद्व्यधिकरणानामपि विशेषाभावानां युगपदिन्द्रियसन्निकर्षे सामान्यावच्छिन्नप्रतियोगिताकत्वप्रत्ययोऽपि स्यात्, अपि च रूपान्तरेण सम्बन्धविधया वा व्यासज्यवृत्तिधर्म्मस्य ज्ञानेन यावदाश्रयसन्निकर्षापेक्षा मानाभावात्, एवञ्च एकाभावसन्निकर्षेऽपि सामान्याभावबुद्धिप्रसङ्गः, यादृशे च तस्य ज्ञाने यावदाश्रयाणां सन्निकर्षोऽपेक्ष्यते,

---

स्वभावो न तत्राधिकरणनिवेशनमित्यर्थः । ननूक्तमेव सम्भवति चेदमित्यादिना प्रतियोगिता अतिरिक्तेति तस्या एव व्यासज्यवृत्तित्वं कल्प्यं नातिरिक्ताभाव इत्यत आह, किञ्चेति । ननु निरधिकरणाभावप्रतीतिर्नास्त्येव व्यासज्यवृत्तिधर्म्मस्यैव तदधिकरणावृत्तित्वे तत्र प्रतीतिरितिपूर्व्वापरितोषादाह, अपि चेति । रूपान्तरेणेति । प्रमेयत्वादिना तथाभाने न तदपेक्षेत्यर्थः । ननु व्यासज्यवृत्तिधर्म्मस्य लौकिकप्रत्यक्ष एव यावदाश्रयसन्निकर्षापेक्षा तत्र च तद्विषयत्वं प्रकारतया सम्बन्धविधया वेत्यन्यदेतत्, अतएव संयोगसंसर्गकदण्डीति भानं दण्डपुरुषसन्निकर्ष एवेत्यत आह, यादृशे चेति, तस्येति । व्यासज्यवृत्तिधर्म्मस्येति व्यासज्य-

तच्च तेषां तद्भेदस्य च ज्ञानमपि तदज्ञाने तदभेद-ज्ञाने च तदग्रहात् आश्रयभेदभ्रमेण तद्भ्रमदर्श-नाच्च। न चात्र यावद्विशेषाभावानां प्रथममुपस्थितिः सम्भवति, तत्प्रतियोगिनां विशेषतोऽनुपस्थितेरिति दिक्॥ ४॥

केचित्तु अनन्तविशेषाभावानां सामन्यावच्छिन्न-

---

धर्म्मस्येत्यर्थः। तेषामिति। यावतामाश्रयाणामित्यर्थः। तद्भेदः आश्रयभेदः। तदज्ञाने यावदाश्रयाज्ञाने, भेदज्ञानव्यतिरेकात् कार्य्यव्यतिरेकमाह, तदभेदेति। तदग्रहात् व्यासज्यवृत्तिधर्म्मा-ग्रहात्, दृढ़ीकर्त्तुं व्यतिरेकमुक्त्वाऽन्वयमप्याह, आश्रयभेदेति। प्रकृते उपपादयति, न चात्रेति। विशेषत इति। तत्तदत्यन्ताभाव-ग्रहे तत्प्रतियोगिज्ञानस्यावश्यकत्वादिति। ननु व्यासज्यवृत्तित्वं द्वित्वसंयोगप्रकृतप्रतियोगितापि साधारणं नैकं तत्कथं सामान्येन कार्य्यकारणभावग्रहः, विशिष्य तु कार्य्यकारणभावे प्रकृतप्रति-योगितायां तथोपपादने साधकाभाव इत्यत आह, दिगिति। यत्तु पर्य्याप्त्याख्यसम्बन्धनियतविषयताविशेषमादायैव सामान्येनैव व्या-प्तिरिति। तन्न तत्तत्पर्य्याप्तेरपि तत्तत् स्वरूपसम्बन्धरूपत्वादिति। दिगर्थस्तु तादृशप्रतियोगिताभावयोरतिरिक्तत्वकल्पने विनि-गमनाविरह एवेति, अतएव सार्व्वभौममतेऽपि वच्यत्यप्रत्यू-हैवेति॥ ४॥

सार्व्वभौममतमुद्घाटयति, केचित्त्विति। स व्यासज्यवृत्तित्वं

प्रतियोगिताकत्वस्य तद्व्यासज्यवृत्तित्वस्य च कल्पना-मपेक्ष्य लाघवात् सामान्यावच्छिन्नप्रतियोगिताकत्वे-नैक एवाभावः कल्प्यते कल्पनीयगौरवस्योभयत्र तुल्यत्वेऽपि एतदपेक्ष्य तस्य गुरुत्वात्, विनिगमना-भावेऽपि च सामान्याभावसिद्धिरप्रत्यूहैव, धर्म्मकल्पना-तोधर्म्मिकल्पनाया गुरुत्वं कल्पनीयानेकत्वप्रयुक्तम्।

---

प्रकृतप्रतियोगिताव्यासज्यवृत्तित्वं, ननु भवताप्यतिरिक्तोऽभावः कल्प्यत इत्यत आह, कल्पनीयेति। उभयत्वेऽपि धर्म्मिकल्पने धर्म्मकल्पनेऽपीत्यर्थः, एतदपेक्ष्येति। सामान्याभावं तत्सामान्यावच्छि-न्नप्रतियोगिताकत्वमपेक्ष्य बहूनां तथा कल्पने गौरवमित्यर्थः। ननु सामान्यावच्छिन्नप्रतियोगिताकत्वकल्पनं किमर्थं संसर्गस्य संस-र्गकल्पने प्रयोजनाभावात्, किन्त्वेकैव प्रतियोगिता सैव सामान्या-वच्छिन्ना बहूनां संसर्गरूपेत्यत आह, विनिगमनेति। अयमर्थः एकाप्रतियोगिताबह्वभावनिरूपिता वा कल्प्यते नानाबहुप्रति-योगितानिरूपित एक एव वाभावः कल्प्यत इति विनिगमनाविरह इति। इदं पुनरापातत एव, वस्तुतस्तु सिद्धे सामान्याभावे लाघवा-देकैव प्रतियोगिता कल्प्यते अतएवावच्छेदकलक्षणेऽपि तथैवोक्त-मिति। नन्विदमेव विनिगमकं यत्प्रतियोगितायाः धर्म्मरूपत्व-मभावस्य धर्म्मिरूपत्वमिति तदुक्तं धर्म्मिकल्पनातो धर्म्मकल्पनाया लघुत्वमिति अतएवाह, धर्म्मकल्पनात इति। तथाच धर्म्मिणां बहूनां कल्पत्वे बहुकल्पनम् एकस्यैव धर्म्मस्य कल्पनमिति

न चातिरिक्ताभावस्य तत्र च सामान्यावच्छिन्नप्रतियोगि-ताकत्वस्यानन्तवाय्वाद्यधिकरणावृत्तित्वस्य च कल्पना-मपेक्ष्य क्लृप्तानन्तवाय्वाद्यधिकरणावृत्तित्वानां यावद्-विशेषाभावानामेव सामान्यावच्छिन्नप्रतियोगिताकत्वस्य तद्व्यासज्यवृत्तित्वस्य च कल्पनैव लघीयसीति वाच्यम् एवं सत्यभावमात्रासिद्धिप्रसङ्गादित्याहुः ॥ ५ ॥

इति तत्त्वचिन्तामणि-दीधितौ सामान्या-भावः समाप्तम् ।

---

लाघवमेव तन्मूलम्, प्रकृते तु धर्म्मिस्वरूप एवेति न तदवतार इति । एवं सतीति । घटाभावस्तावदेकोऽधिकः कल्प्यः, तस्यानन्ताधि-करणवृत्तित्वं च कल्प्यं तदपेक्ष्य क्लृप्तानन्ताधिकरणानामेव तथा प्रतीतिनियामकत्वमित्यभावमात्रासिद्धिरित्यर्थः । केचित्तु प्रति-बन्धकाभावस्य कारणतायां तावदनन्ताभावानां कारणत्वं कल्प्यत इत्यतिरिक्तसामान्याभावस्य वा । एवम् अभावघटितशक्तिकल्पने तावद्विशेषाभावानां वा तथात्वं कल्प्यते सामान्याभावस्य वेत्यत्र इत्यमेव लाघवं तर्कमाहुः ॥ ५ ॥

इति महामहोपाध्याय-कृष्णदाससार्व्वभौम-प्रणीताया-मनुमानदीधितिप्रसारिण्यां सामान्यभाव-व्यवस्थापनं समाप्तम् ।

## अथ विशेष-व्याप्तिः ।

### तत्त्वचिन्तामणिः ।

यद्वा प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यं यत्समानाधिकरणान्यान्योभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं वा स्वसमानाधिकरणान्योन्याभावाप्रतियोगियद्वत्कत्वं वा । अन्यवृत्तिवह्नितद्वतो-

---

### दीधितिः ।

यद्वेत्यादि । अथात्र नानाव्यक्तिरूपादिसाध्यकैकव्यक्तिपृथिवीत्वादावव्याप्तिः । न च तत्र रूपवत्त्वादिकमेव साध्यं तच्च परम्परासम्बन्धेन रूपत्वादिकमेव तेन च सम्बन्धेन न तदभावः पृथिव्यादाविति वाच्यं रूपादेरसाध्यतापत्तेः द्रव्यान्यत्वादिविशिष्टसत्त्वाद्य-

---

### प्रसारिणी ।

नानाव्यक्तीति । एकव्यक्तिहेत्वधिकरणके तदभावस्याभावादित्यर्थः एकव्यक्तीति । नानाव्यक्तिके तु यद्धेत्वधिकरणे या साध्यव्यक्तिस्तयोरेव व्याप्तिर्वक्तुं शक्यत इति भावः । यत्तूपतिमतं निराकरोति, न चेति । रूपादेरिति । तथाच रूपमनुमिनोमीत्यनुभवविरोध इति भावः । ननु रूपत्वादिकमिति दण्डादिसाध्यकगतिरेवात्रापि भविष्यतीत्याह, द्रव्यान्यत्वेति । अन्यथा विशिष्टा-

रन्यवृत्ति-धूमवह्निष्ठात्यन्ताभावान्योन्याभाव-प्रतियोगि-त्वाद्व्यधिकरणवह्निधूमयोर्न व्याप्तिः किन्तु तत्तद्धूमस्य समानाधिकरणतत्तद्वह्निना । न चैवं धूममात्रे न व्याप्तिरिति वाच्यं सर्व्वधूमव्यक्तेस्तथात्वेन धूममात्रस्य व्याप्यत्वात्, धूमसम्बन्धिवह्निस्तद्व्याप्य एव, युगपदुत्पन्न-विनष्टयोश्च व्याप्तिरेव, कर्म्मणि च संयोगाभावः प्रति-योग्यसमानाधिकरणः । यद्वा प्रतियोगिवैयधिकरण्या-

---

भावस्य द्रव्यादिवृत्तित्वात् सत्त्वादिसाध्यकद्रव्यत्वादाव-व्याप्तिश्च, अन्यथा विशिष्टतया सत्तादेः साध्यत्वे व्यभि-चारिणि जातिमत्त्वादावतिप्रसङ्गात् । व्युत्पादयि-ष्यते च विशिष्टाभावस्य विशेष्यप्रतियोगिकत्वं द्वित्वा-द्यवच्छिन्नसाध्याभावस्य तत्र सत्त्वाच्च । अथाप्रति-योगित्वं प्रतियोगित्वाभावः स च येन रूपेण तद्रूपा-वच्छिन्नव्याप्यत्वं हेतौ, अस्ति चायं रूपादौ रूपत्वादिना

---

भावस्य विशेष्याप्रतियोगिकत्वे । ननु कथमतिप्रसङ्गः विशिष्टतया सत्त्वादेः साध्यत्वेऽपि विशिष्टमन्यदेवेत्यत आह, व्युत्पादयिष्यत इति । दण्डितया पुरुषो नास्तीति विलक्षणानुभवादित्यर्थः, अनु-भवे विवादादाह, द्वित्वेति । तथाच वह्निमान् धूमादित्यत्राव्याप्ति-रित्यर्थः, उभयाभावस्य विशिष्टाभावरूपत्वं पूर्व्वमेव खण्डितमिति ।

वच्छेदकावच्छिन्नत्वमत्यन्ताभावविशेषणं कर्म्मणि च संयोगाभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वमेव। न चान्योन्याभावस्याव्याप्यवृत्तित्वम् अभेदस्याबाधितप्रत्यभिज्ञानात्। व्याप्यव्यापकभावाज्ञानेऽपि वस्तुसतस्तथात्वेनाज्ञायमानस्य सम्बन्धत्वेनैव भातस्य षष्ठ्यर्थत्वं न चैवमननुगमो दोषाय कस्य का व्याप्तिरित्यननुगतस्यैव लक्ष्यत्वात्।

---

न पृथिव्यादिनिष्ठाभावप्रतियोगित्वमिति प्रत्ययादिति चेन्न, तादृशप्रतीत्या हि रूपत्वादौ प्रतियोगिताया अवच्छेदकत्वाभावो गृह्यते न तु तदभावावच्छेदकत्वं सर्व्वत्रैव रूपे पृथिवीनिष्ठाभावप्रतियोगित्वं न तु कुत्रापि रूपे तदभाव इत्यबाधितप्रत्ययात् अन्यथा यो यो धर्म्मो यस्य यस्य नावच्छेदकः तत्तदवच्छेदेन तत्तदभावोऽप्युक्तरीत्या सिध्येत ॥ ६ ॥

---

प्रगल्भमतं निराकर्त्तुमाशङ्कतेऽथेति। ननु पृथिव्यादिनिष्ठाभावप्रतियोगित्वस्य प्रतियोगिन्यविषयीकरणात् कथमवच्छेदकत्वाभावविषयीकरणे नान्यथासिद्धिरित्यत आह, सर्व्वत्रैवेति। तथाचानेन बाधकेन तृतीयोल्लिखितावच्छेदकत्वस्यैव प्रतियोगित्वेन विषयीकरणं कल्प्यत इति भावः। अन्यथा, तेन रूपेण प्रतियोगित्वाभावविषयीकरणम् ॥ ६ ॥

प्रमेयधूमत्वेन न वह्निमन्निष्ठाभावप्रतियोगित्व-मितिप्रत्ययात्तदवच्छेदेन तादृशप्रतियोगित्वाभावस्यापि सुवचत्वाच्च। अथ प्रमेयधूमत्वं न गौरवेण सामानाधि-करण्यप्रतियोगितावच्छेदकं विवक्षितञ्चात्र तथेति चेत्, असमानाधिकरणधूमकव्यक्तिवृत्तितया वह्नित्वमपि न तदवच्छेदकं कम्बुग्रीवादिमत्त्वादिना च घटादे-रसाध्यतापत्तिरिति वह्वव्याकोपश्च। अतएव प्रमेय-धूमत्वं गौरवेन प्रतियोगिताया इव तच्छून्यताया अपि नावच्छेदकमित्युक्तावपि न निस्तारः। अत्र वदन्ति अप्रतियोगित्वं प्रतियोगितानवच्छेदकधर्म्मवत्त्वं न चैवं

---

सिद्धेरदित्यत्रेष्टापत्तौ अनिष्टमाह, प्रमेयधूमत्वेनेति। तथा, सामानाधिकरण्यप्रतियोगितावच्छेदकत्वम्, असमानाधिकरणेति। वह्निमान् धूमादित्यत्रायोगोलकीयवह्नेर्धूमासमानाधिकरणतया-वह्नित्वस्य तद्वृत्तित्वेन सामानाधिकरण्यावच्छेदकत्वहानिरित्यर्थः। अतिरिक्तवृत्तित्वेन तदनवच्छेदकत्वमुक्त्वा गौरवेणानवच्छेदकत्व-माह, कम्बुग्रीवादीति। ननु प्रमेयधूमत्वं यथा प्रतियोगितानव-च्छेदकं तथा प्रतियोगित्वाभावस्याप्यनवच्छेदकं वाच्यं सामाना-धिकरण्यांशे चावच्छेदकत्वमविवक्षितमेवेत्याशङ्क्य दूषयति, अत-एवेति। अतएव कम्बुग्रीवादिमत्वादेरप्यनवच्छेदकत्वप्रसङ्गादे-वेत्यर्थः। न च पारिभाषिकावच्छेदकत्वमेव वक्तव्यम्। तथापि

पूर्व्वस्मादभेदः तत्र साध्यजातीयसमानाधिकरणसाधन-जातीयत्वस्य अत्र च साध्यसाधनयोः सामानाधिकरण्यस्य व्याप्तित्वे तात्पर्य्यात्। घटकयोस्तादृशप्रतियोगितावच्छेदकतत्त्वान्योन्याभावात्यन्ताभावयोर्भेदेन भेद इत्यपि कश्चित् ॥ ७ ॥

अत्यन्ताभावगर्भवत्सामान्यविशेषभेदेनान्योन्याभावगर्भमपि व्याप्तिद्वयमाह, यत्समानाधिकरणेत्यादि-लक्षणद्वयेन, प्रथमे एकस्य साध्याधिकरणांशस्याधिक्यात् द्वितीयलक्षणम्, अत्र यद्यपि नानाव्यक्तिसाध्यकस्थले

---

तत्तद्रूपत्वादेरतिरिक्तवृत्तित्वेन रूपत्वस्य रूपसाध्यकव्यभिचारित्वातिप्रसङ्गात्, तात्पर्य्यादिति। पूर्व्वत्र साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यस्य हेतुतावच्छेदकावच्छिन्नयावद्धेतोर्व्याप्तित्वादिति अत्र तु तत्तद्व्यक्त्योरेवेति, घटकयोरिति। अनवच्छेदकमित्यत्र घटकयोरित्यर्थः। कश्चिदित्यस्वरसोद्भावनं तद्वीजन्तु सामान्यविशेषलक्षणानुपपत्तिरिति ॥ ७ ॥

प्रथम इति। प्रतियोगियद्वन्न भवति तेन समं सामानाधिकरण्यमित्यत्र तदधिकरणाधिकरणत्वमित्यर्थस्तत्र तदधिकरणपदं व्यर्थम्। यद्वत्त्वाभावं तद्वृत्तित्वमित्यत एव सामञ्जस्यादिति। तद्वत् वह्निसंयोगवत्, साक्षाद्वह्न्यादौ। परम्परया शेषयोः। ननु शेषयोर्न ग्रहैक्यं तत्र साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्न-

तत्तत्साध्यवतस्तत्तत्साध्यवत्त्वस्य च साधनसमानाधिकरणान्योन्याभावप्रतियोगित्वात्तदवच्छेदकत्वाच्चाव्याप्तिः, तथापि यद्रूपावच्छिन्नवत्त्वं तादृशान्योन्याभावप्रतियोगितानवच्छेदकं तद्रूपावच्छिन्नसामानाधिकरण्यमित्यत्र तात्पर्य्यम् । वह्न्यादौ तत्संयोगादौ तद्दण्डादौ वा साध्ये सर्व्वत्र साक्षात्परम्परया वा अनुगमकं वह्नित्वादिकमेव साध्यतावच्छेदकं, तदवच्छिन्नवत्त्वस्य च न तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वमिति, यत् यद्रूपावच्छिन्नं तादृशरूपावच्छिन्नमनवच्छेदकमिति वा यथायथं वक्तव्यं शब्दैक्यस्यानुपादेयत्वात् । अन्येत्यादिमूलम् । यद्यप्युक्तरीत्या सर्व्वत्र तादृशप्रतियोगितानवच्छेदकत्वपर्य्यन्तानुधावनस्यावश्यकत्वेनाकिञ्चित्करमेव तादृशाभावप्रतियोगित्वं, तथापि विशिष्टसामाना-

---

वत्त्वस्यानवच्छेदकत्वात् किन्तु तत्संयोगवत्त्वादेरित्यत आह, यदिति । यदनवच्छेदकमिति, एकव्यक्तिसाध्यस्थले यद्रूपावच्छिन्नसाध्यमनवच्छेदकमिति । वह्न्यादिसाध्यकस्थले यादृशरूपावच्छिन्नमिति च वह्निसंयोगादिसाध्यके यं यथाक्रमसूक्तिके । ननु वह्नित्वावच्छिन्नवह्नित्वेनावच्छेदकत्वात् कथं चरमद्वयमिति चेदत्रापि दण्डादिसाध्यकप्रकारस्यानुसरणीयत्वात् । विशेषलक्षणा-

धिकरण्यरूपाया व्याप्तेर्व्यधिकरणासम्भवित्वमात्रे तात्पर्य्यं, व्याप्तिरेवेत्यस्य कालिकीत्यादि ॥ ८ ॥

अन्योन्याभावगर्भलक्षणस्याव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिं निरस्यति, न चेति। अभेदस्येति। तथाच मूले महीरुहो विहङ्गमसंयोगी नेति प्रतीतेरनुभूयमानविशिष्टभेदोल्लेखिन्या अपि शिखी विनष्ट इति प्रतीतिवद्विशेषणाभावविषयतामात्रं कल्प्यते बाधकबलात् यत्र च विशिष्टभेदे न बाधकं तत्र तथाप्रतीतिबलात्तत्सिद्धिरप्रत्यूहैवेति नातिप्रसङ्गः।

अत्र वदन्ति। अभेदस्य भेदाभावस्य ज्ञानं न बाधकं भेदवत्तत् प्रतियोगितावच्छेदकस्य संयोगात्मन-

---

भिप्रायेण मूलं योजयन्नाह, तथापीति। तथाच मूले प्रतियोगित्वादित्यन्तं तादृशव्याप्तेर्व्यधिकरणासम्भवित्वे हेतुरिति भावः। दैशिकव्याप्तौ युगपदुत्पन्नत्वादिकं व्यर्थमत आदिभागं पूरयति कालिकीति ॥ ८ ॥

लक्षणस्येति। सामान्यत एकवचनम्। शिखीति। शिखाविनष्टा पुरुषो न नष्ट इत्यादिन्यायात् विशिष्टस्य नाशप्रतियोगित्वेऽपि तत्प्रतीतेः, यथाविशेषणाभावावलम्बनत्वं, तथोक्तबाधात् प्रकृतेऽपीत्यर्थः। नन्वेवं गुणादावपि संयोगिभेदो न सिद्ध्येत अत आह, यत्र चेति। तत्र च बाधिकायाः प्रतीते-

स्तदभावस्याव्याप्यवृत्तित्वेन तदुपपत्तेः, यथा हि प्रति-योगितावच्छेदकावच्छिन्नप्रतियोगिज्ञाने तदत्यन्ताभाव-स्याग्रहात्तदत्यन्ताभावाभावव्यवहाराच्च स एव तदभाव इति कल्प्यते, तथा प्रतियोगितावच्छेदकधर्म्मग्रहे तद्वद-न्योन्याभावस्याग्रहात्तदभावव्यवहाराच्च स एव तस्या-भाव इति निश्चीयते, आधिक्येऽपि चाव्याप्यवृत्तित्वात्, अतएव न मूलावच्छेदेन कपिसंयोगिभेदाभावज्ञानं तथा असम्भवादसिद्धेश्च नापि कपिसंयोगिभेदस्य वृत्त्या-वृत्तित्वज्ञानमसिद्धेः तद्वृत्तित्वस्यैव ग्रहात् नापि कपि-संयोगिभिन्नभेदज्ञानं कपिसंयोगिभेदवत्तद्भेदस्याप्य-

---

दभावादित्यर्थः । तदुपपत्तेरिति । भेदाभेदयोरेकत्र वृत्तेर्न विरोध इति भावः । ननु यदि प्रतियोगितावच्छेदकस्य भेदाभावा-त्मकत्वं, तदैतत् स्यादिति तदुपपादयति, यथा हीति । ननु प्रतियोगिज्ञानेऽभावाग्रहात् प्रतिबन्धकत्वमाया तु तदभावा-त्मकत्वम् इत्यत आह, अभावव्यवहारेति । नन्वभावप्रतीतेः प्रमात्वा-नुरोधादतिरिक्त एव सेत्स्यतीत्यत आह, आधिक्य इति । अत-एवेति । यत एव तदभावस्य संयोगसमनैयत्यमित्यर्थः । तथा प्रति-बन्धकं संयोगमभिप्रेत्यासम्भवादिति । अतिरिक्तमभिप्रेत्यासिद्धे-रिति । ज्ञानम्, प्रतिबन्धकमिति शेषः । एवमग्रेऽपि तद्वृत्तित्वस्ये-त्यस्य प्रत्युतेत्यादि । तद्भेदस्येति । तद्भेदः संयोगी वा संयोगसम-

व्याप्यवृत्तित्वेनाविरोधात्, नापि मूलावच्छेदेन तज्-ज्ञानमसिद्धेः तद्धर्म्मवद्भिन्नभेदस्य तद्धर्म्ममात्रपर्य्यवसिततया कपिसंयोगिभिन्नभेदात्मनः कपिसंयोगस्य मूलवृत्तित्वविरोधाच्च ॥ ९ ॥

न हि घटभिन्नभेदो घटत्वादतिरिच्यते आवश्यकक्लृप्तघटत्वेनैवोपपत्तौ अतिरिक्तकल्पनायां मानाभावात् अन्यथा सर्व्वत्राभावस्याभावोऽतिरिक्त एव कल्प्येत, अतएवात्यन्ताभाव-प्रतियोगिनोरन्यान्याभावप्रतियोगितावच्छेदकयोः सामान्यत एव क्लृप्तो विरोधः, तत्र कपिसंयोगवत्यपि वृक्षे मूले न कपिसंयोग इति प्रतीतेरन्यथानुपपत्त्या तावदाद्ययोः स सङ्कोच्यतां न ह्येषा प्रतीतिः कपिसंयोगिभेदविषयत्वेनोपपादयितुं शक्या, नियमतः संयोगवत्त्वेन प्रतियोगिनोऽनुप-

---

नियताभावो वेत्यन्यदेतत्। असिद्धौ विवादादाह, तद्धर्म्मेति। इदञ्च प्राचीनमतमभिप्रेत्य, स्वमते तु तद्भेदः संयोगसमनियत इति न कश्चिद्विशेषः अतएवेति विरोध इत्यर्थः॥ ९ ॥

ननु भेदेनैवात्यन्ताभावः कथं नान्यथा सिद्ध्यत इत्यत आह, न ह्येति। कदाचिन्न संयोगवति वृक्षे मूले न संयोग इति प्रतीतिसत्त्वादाह, नियमत इति। प्रतियोगीति। यत्रापि संयोगवति वृक्ष इत्यादि-

स्थितेः प्रतियोगिकोटौ तदनुल्लेखाच्च मूले न कपि-संयोगीति प्रतीतेस्तु शिखी विनष्ट इतिवद्भासमान-विशेषणस्याभावमात्र--विषयत्वेनोपपन्नत्वान्नान्तिमयोर-पीति परास्तम् । अन्योन्याभावान्तरस्य प्रतियोगि-तावच्छेदकान्तरसमानाधिकरणतया स्वस्वप्रतियोगि-तावच्छेदकासामानाधिकरण्यपर्य्यवसायिनो विरो-धस्य सत्त्वघटितत्वेन विशेषत एव विश्रामात्, अत्य-न्ताभावप्रतियोगिनोरिवान्योन्याभावप्रतियोगितावच्छे-दकयोरबाधितसामानाधिकरण्यानुभवेन प्रतिविरुद्ध-तया तथाविधविरोधकल्पनाया अनवकाशाच्च । किञ्च

---

प्रतीतिस्तत्रापि संयोगवतो वृक्षस्यानुयोगितायामेवोल्लेखो न प्रति-योगितायामित्यर्थः । अत्यन्ताभावेनान्योन्याभावमन्यथासिद्धयन्नाह, मूल इति । अत्र च प्रतियोगिकोटावेव संयोगिनः प्रवेशे संयोगस्यापि तथात्वमिति हृदयम् । शिखी विनष्ट इतिप्रतीतिवदिति । विशेषण-प्रतियोगिकत्वांशमात्रे दृष्टान्तः । अभावविषयतामात्रमिति । भेद-त्वेन भानेऽपि विशेषणात्यन्ताभावेन निर्वाहार्थं मात्रपदमिति । अन्तिमयोः अन्योन्याभावप्रतियोगितावच्छेदकयोरपीति । शङ्कोच्य-तामित्यनुषज्यते । ननु विशिष्यैव कथं न विरोधः, सामानाधिकर-ण्यानुभवत्वमेवासिद्धम् । किञ्च भेदस्य शाखाद्यवच्छिन्नवृत्त्यावृत्तित्व-कल्पनमपेक्ष्य लाघवेन वृत्त्यावृत्तित्वमेव कल्प्यत इत्यत आह,

शिखी विनष्ट इति प्रतीतेर्विशिष्टध्वंसोल्लेखिन्या विशेष्ये तद्बाधादास्तां विशेषणध्वंसविषयता, न संयोगीति प्रतीतेर्विशिष्टभेदमवगाहमानायाः कथं विशेषणसंसर्गाभावविषयत्वेनोपपत्तिः, न खलु सहस्रेणापि बाधकैरिदं रजतमिति प्रतीतेरङ्गत्वावलम्बनं व्यवस्थापयितुं शक्यते, न च विशेषणभेद एव तस्या विषयः अग्रेऽपि न कपिसंयोगीति प्रतीत्यापत्तेः युज्यते चान्योन्याभावोऽव्याप्यवृत्तिः कथमन्यथा पक्वतादशायां घटादावयं न श्यामो दण्डादिविनाशसमये चैत्रादौ नायं तद्दण्डवानित्यादयो व्यवहाराः, न च तत्र विशेषणसंसर्गाभाव एव प्रतीयते अनुयोगिनि सप्तमीं विना तदनुपपत्तेः, न खलु भूतलं न घट इत्यादीनि

---

क्लिप्तेति। तथाविशेषणात्यन्ताभावेन नान्यथासिद्धिरिति अनुभवबलादेव गौरवमप्याश्रीयत इति भावः। न खल्वित्यादि। तत्प्रकारकत्वस्यानुव्यवसायेन विषयीकरणादिति भावः। ननु प्रत्यक्षप्रतीतौ अत्यन्ताभावस्यापि विषयस्य सत्त्वात् तदनवगाहनं केन निरटङ्कि इत्यतः प्रतिनियतविषयकत्वं शब्दमप्युपष्टम्भकमाह, युज्यते चेति। अयमिति। इदानीमिति शेषः। एवमग्रेऽपि इदञ्च पिठरपाकमभिप्रेत्य। अत्रापि पीलुपाकमादाय विवादादाह, दण्डादौति संसर्गाभाव इति। तेन दण्डध्वंसोऽपि संगृहीतो

वाक्यानि कदाचिदपि घटसंसर्गाभावं बोधयन्ति तथात्वे वा घटो न घट इत्यादेरपि प्रसङ्गात् ॥ १० ॥

अपि च विशिष्टवाचकदण्ड्यादिपदेभ्यो धर्म्मुपस-र्ज्जनतयोपस्थितस्य दण्डादेः कथं प्रतियोगित्वेनाभावेऽन्वयः इतरविशेषणत्वेनोपस्थितस्य निराकाङ्क्षतयान्यत्र विशेषणत्वेनान्वयायोगात् । न चात्र विशिष्टोपस्थापकं पदं विशेषणमात्रपरं, तथापि चैत्रो न दण्डी घटो न श्यामं रूपमित्यादावपि दण्डादिसंसर्गाभावप्रतीत्यापत्तेर्दुर्व्वारत्वात्, एतेन नञोऽभाववल्लाक्षणिकतया विनैव सप्तमीमन्वयबोधसमर्थनं प्रत्युक्तम्, एवञ्च चैत्रो

---

भवतीति प्रकृतमेव व्यतिरेकेण व्यवस्थापयितुमाह, न खल्विति । इष्टापत्तावनिष्टमाह, तथात्वेति ॥ १० ॥

ननु यत्र विशेषणतावच्छेदकप्रकारेणैव विशेषणं भासते तत्रैवानुयोगिनि सप्तमीं विनापि विशेषणाभावोऽवगम्यत इह तु घटस्य विशेष्यतया न तदित्यत आह, अपि चेति । तथापीति । विशिष्टपदस्य विशेषणपरतया तथा समर्थने शुद्धविशेषणोपस्थापकस्य सुतरामेव तथात्वापत्तेरित्यनुयोगिनि सप्तम्या अभावाश्रयत्वलाभार्थैवादर इति मन्वानो नञ्पदेऽभाववत्येव लक्षणया तल्लाभ इति यो ब्रवीति तन्मतं दूषयति, एतेनेति । चैत्रो न दण्ड इत्याद्यापादनेनेत्यर्थः । ननु सर्वत्रैव संसर्गाभावबोधने यद्यनुयोगिनि सप्तम्यपेक्षा

न पचतीत्यादौ आख्यातात्कृत्या लक्षणया वोपस्थितस्य कर्त्तुरेव भेदो भासत इत्यस्तु, वस्तुतो न पचति चैत्रो नेदं मैत्रस्येत्यादौ विभक्त्यर्थस्य कृतिसम्बन्धादेरभावान्वयबोधे नञा सप्तमी नापेक्ष्यते, अपेक्ष्यते च प्रातिपदिकार्थस्येति निपुणतरमुपपादयिष्यामः। नञो वैधर्म्म्यपरतया न श्याम इत्यादेः श्यामादिविधर्म्मेत्यर्थः, वैधर्म्म्यञ्च रक्तत्वादिकमेव यदाहुराचार्य्याः, श्यामाद्रक्तोविधर्म्मा न तु पृथगित्यपि वदन्तीति कृतं पल्लवितेन॥ ११ ॥

सम्बन्धत्वेनेति। निरूपितत्त्वमेतत्। कस्येति। इत्यञ्चाननुगताया अपि व्याप्तेर्ज्ञानं यथानुमितिहेतुस्तथा

---

तदा न पचतीत्यत्र कथं पाककृत्यभावबोध इत्यतस्तद्बोधयति, एवं चेति, शक्त्येति। वैयाकरणमते लक्षणादिकल्पनादाह, वस्तुत इति। सम्बन्धादेः नेदं मैत्रस्येत्यादौ, निपुणतरमिति। नञ्व्यतिरेकेण प्रतियोग्यन्वये यत्रानुयोगिनि सप्तम्यपेक्षा तत्रैव नञा सापेक्षते नान्यत्रेत्यादेः प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमावित्यनेन नञ्वादे प्रतिपादितत्वादिति। ननु वैधर्म्म्यं तदवृत्तिधर्म्म इत्यत आह, वैधर्म्म्यञ्चेति। अपीत्यस्वरसोद्भावनं तद्बीजं तु नञा तदकालीन स्वप्रकारेणोपस्थितौ लक्षणेति॥ ११ ॥

निरूपितत्वमिति। संयोगत्वादिनैव तत्प्रवेश इति भावः। अतएव

अथ धूमवति वह्निवह्निमन्तौ न स्तः धूमवान् वह्नि-मद्भेदौ न भवतीतिप्रतीतेर्व्यासज्यवृत्तिप्रतियोगिकौ वह्निवह्निमतोरत्यन्तान्योन्याभावौ धूमवति विद्येते इति कथमेते लक्षणे इति चेन्न, तादृशाभावानभ्युप-गमात् अभ्युपगमे वा तत्र तदुभयं प्रतियोगि न वह्नि-वह्निमन्तौ ।

---

वक्ष्यते । एते अन्योन्याभावात्यन्ताभावगर्भे । तादृ-शेति । ननु किं द्वित्वादिकं प्रतियोगितावच्छेदकमेव न भवति किं वा भवत्येव, परन्तु क्लृप्तानामेव स्वसमाना-धिकरण-तत्तद्धर्म्मावच्छिन्न-प्रतियोगिताकानामभावानां लाघवादित्यभिप्रायः, नाद्यः एकैकाभावप्रतीतितो द्वौ न स्त इति प्रतीतेर्व्विलक्षणत्वात्, शब्दादिना द्वौ न स्त

---

इत्यमिति । वक्ष्यत इति । विशिष्यैव कार्य्यकारणभावौ न सामा-न्यत इति । चतुर्णामेव लक्षणानामाक्षेपात् मूलस्य द्विवचनं न घटत इति तदुपपादयति, एते इति । तथाच तत्तदभावगर्भत्वेन द्वयोरैक्यमिति भावः । अभ्युपगमे वेत्यस्याक्षेपमारभते, नन्वित्या-दिना । नन्वेकाभावप्रतीतिसाधारण्येऽपि द्वित्वस्याधिकस्य भाना-देव वैलक्षण्यमित्यत आह, शब्दादिनेति । प्रत्यक्षे तु तादृशनिश्चय-काले तथा संशयोऽसिद्ध इति हृदयम् । ननु शब्देन घटत्वादेरव-

इति निश्चयेऽप्येकैकाभावसंशयाच्च, विषयानुगमं विना अनुगताकारप्रत्ययायोगात्। न चाभावस्य द्वित्वाधिकरणप्रतियोगिकत्वमात्रं द्वित्वसामानाधिकरण्यधर्म्मावच्छिन्नप्रतियोगिताकत्वं वा द्वयं नास्तीति प्रतीतेर्विषयः, तादृशद्वित्वाधिकरणव्यक्तिविशेषविरहिणि तथाविधोभयशालिनि तादृशौ द्वौ न स्त इत्यप्रत्ययात्, द्वित्वसामानाधिकरण्याभानेऽपि प्रतीतेरनुगताकारत्वाच्च, अत एव न तादृशप्रतीतेर्घटत्वपटत्वाद्यन्यतरावच्छिन्नप्रतियोगिताकाभावविषयत्वम् अन्यतरत्वानुल्लेखेऽपि घट पटौ न स्त इत्यनुगतप्रत्ययाच्च, न च परम्परासम्बन्धेन तादृशद्वित्वसामान्याभाव एव द्वौ न स्त इति प्रती-

---

च्छेदकत्वं न विषयीक्रियत एव परन्तु प्रत्यक्षमादायैव तथा वक्ष्याम इत्यत आह, विषयेति। द्वित्वावच्छिन्नप्रतियोगिताद्यनुगताकार इत्यर्थः। ननु द्वित्वाधिकरणप्रतियोगिकत्वमेवानुगतं वाच्यमित्याशङ्क्य निषेधति, न चेति। प्रथमेऽवच्छेदकत्वस्पर्शाभावादाह, द्वित्वेति। तादृशेति। घटपटोभयविशेषविरहिणि घटपटोभयविशेषशालिनि, घटपटौ न स्तः प्रत्ययादित्यर्थः। ननु द्वित्वसमानाधिकरणत्वेन भासमानो यो धर्म्मस्तदवच्छिन्नप्रतियोगिताकत्वमेवानुगमकं वक्तव्यमित्यत आह, द्वित्वेति। अतएवेति। वक्ष्यमाणात्मकम्, अतएवाग्रे चकारविरहः। परम्परेति। द्वित्वाश्रयघटित-

तेर्विषयः, द्वित्वाधिकरणयोरेव प्रतियोगित्वोल्लेखात् द्वित्वादेर्घटादिवृत्तित्वानुपस्थितावपि अन्ततः शब्देनापि घटपटौ न स्त इत्यादिप्रत्ययाच्च, अतएवैकैकविशिष्टापराभावोऽपि न तदालम्बनं विरुद्धयोरपि जलत्वपृथिवीत्वयोर्द्वित्वेनाभावप्रत्यय इत्युक्तत्वाच्च नान्यः, तथात्वेऽपि साध्यतद्वतोस्तादृशाभावप्रतियोगित्वानपा-

---

परम्परेत्यर्थः। अन्यथोभयवत्यपि उभयवृत्तिद्वित्वस्य साक्षात् सम्बन्धेनाभावात्तादृशप्रतीत्यापत्तिः। द्वित्वाधिकरणयोरिति। द्वित्वं नास्तीत्येवाकारः स्यादिति भावः। ननु प्रत्यक्षे आश्रयस्य द्वित्ववैशिष्ट्यभाने द्वित्वस्यापि तद्द्वित्वस्यापि तद्वृत्तित्वं भासते, तथाच प्रतियोगिकोटौ द्वित्वाधिकरणस्योल्लेखेऽपि तस्य विशेषणतयैवोपयोग इत्यत आह, द्वित्वादेरिति। प्रत्यक्षे विवादादाह, अन्तत इति। घटपटावित्यंशे द्विवचनार्थस्य प्रकृत्यर्थविशेषणतयैव भानाभ्युपगमादिति भावः। अत्रेदं चिन्त्यं, व्यतिरिक्ताभाववादिमतेऽपि द्वित्वमात्रं न प्रतियोगितावच्छेदकं किन्तु घटवृत्तिद्वित्वं, तथाच तादृशबोधार्थं लक्षणावश्यकीति तुल्यम् अनतिरिक्ताभाववादिमते इति, अतएवेति। पटस्य घटवैशिष्ट्याभानेऽपि तादृशप्रतीतिर्यत एवेत्यर्थः। क्वचिद्वस्तुनोऽपि दुर्घटत्वमाह, विरुद्धयोरिति। इत्युक्तत्वाच्चेति। चकारः पूर्व्वोक्तसमुच्चयपरः। किं चेत्याद्यन्यकल्पमाशङ्क्य निषेधति, नान्य इति। तथात्वेऽपीति। ह्रदाभावस्यैव द्वित्वावच्छिन्नप्रतियोगिताकत्वे वह्नेरपि प्रतियोगित्व-

यात्, अन्तरेणाभावान्तरमेकैकघटवति जायमानाया यत्किञ्चिद्घटद्वयवति चानुत्पद्यमानाया घटौ न स्त इति प्रतीतेरुपपादयितुमशक्यत्वादित्यत आह, अभ्युपगमे वेति। उभयत्वमेव प्रतियोगितावच्छेदकं न तु साध्यतावच्छेदकं साध्यवत्त्वं वेत्यर्थः, अश्रूयमाणावच्छेदकत्वांशेऽपि लक्षणे तथैव विवक्षितमिति भावः ॥१२॥

---

मापतितं, अन्यथा द्वित्वस्य कूटमात्रवृत्तिप्रतियोगितातिरिक्तवृत्तित्वेनानवच्छेदकत्वभङ्गादिति। अतिरिक्ताभावमेव व्यवस्थापयति, अन्तरेणेति। एकैकेति। योऽन्तेन घटत्वावच्छिन्नसामान्याभावविषयत्वनिरासः, यत्किञ्चित् घटद्वयप्रतियोगिताकाभावनिरासः। ननु घटौ न स्त इत्यत्र द्वित्वावच्छिन्नाभावः सिद्ध्यतु, घटपटौ न स्त इत्यत्र कथं प्रत्येकाभावद्वयस्यैव द्वित्वावच्छिन्नसामान्याभावविषयत्वनिरासः, यत्किञ्चिदिति। तेन यत्किञ्चित् घटद्वयस्यैव द्वित्वावच्छिन्नप्रतियोगिताकत्वकल्पनादिति चेदत्र वदन्ति। सामान्याभावयुक्तिन्यायेनातिरिक्तद्वित्वावच्छिन्नप्रतियोगिताकल्पने विनिगमनाविरहेणातिरिक्ताभावकल्पनमिति। क्लृप्ताभावेन द्वित्वप्रतीतेरन्यथोपपादनेऽपि द्वित्वविशिष्टाभावस्य विशिष्टाभावतयातिरिक्तस्यैव व्यासज्यवृत्तिप्रतियोगिताकाभावत्वमित्यपि कश्चित्। उभयत्वमेवेति। सम्मुग्धमेवाभावद्वयघटितं लक्षणमभिप्रेत्य अतएव तथैव निराकरोति। नन्विति। ननु विशेषलक्षणेऽवच्छेदकाप्रवेशात्तत्र सदोषस्तदवस्थ एवेत्यत आह, अश्रूयमाणेति ॥ १२ ॥

अथवानौपाधिकत्वं व्याप्तिः, तच्च यावत् स्वसमानाधिकरणात्यन्ताभाव--प्रतियोगितावच्छेदकावच्छिन्नं यत् तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत् तेन समं सामानाधिकरण्यम् ।

---

तच्चेति । स्वं साधनत्वाभिमतं तथाच साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदका यावन्तो धर्म्मा यद्धर्म्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकाः तद्धर्म्मावलीढ़सामानाधिकरण्यमित्यर्थः, एतेन सर्व्वत्र तादृशैर्यावद्भिरवच्छिन्नस्य तादृशावच्छिन्नयावत्प्रतियोगिकस्य चातिप्रसञ्जकात्, यावत्त्वाद्यवच्छिन्न–प्रतियोगिताकादतिरिक्तस्याभावस्याप्रसिद्धिः

---

तथा चेत्यादि । यद्धर्म्मावच्छिन्नेति । यत्साध्यतावच्छेदकावच्छिन्नेत्यर्थः । तेनेदं गुणकर्म्मान्यसत्तावज्जातिमत्त्वादित्यत्र द्रव्यत्वादेर्जातिसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वेऽपि न क्षतिः । यथाश्रुतमूलानुपपत्तिं व्यञ्जयति, एतेनेति । अवच्छिन्नस्येति । अप्रसिद्धेरित्यनेनान्वितम्, अवच्छेदकस्य यावत्त्वं विहायावच्छिन्नेऽपि तद्योगं खण्डयति, तादृशेति । अतिप्रसञ्जकादिति । धूमवत्यपि यावदार्द्रेन्धनाभावसत्त्वादतिव्याप्तेरित्यर्थः । आदिपदेन यावत्तादृशावच्छिन्नगगनद्वित्वुभयत्वपरिग्रहः । अवच्छि-

तादृशावच्छिन्नप्रतियोगिताकानां यावदभावानामधिकरणस्य प्रायशस्तथा। रूपादिसाध्यकपृथिवीत्वादावव्याप्तिश्च क्वापि रूपादिव्यक्तौ तादृशयावदभावसामानाधिकरण्यासम्भवादिति प्रत्युक्तम्। सर्व्वत्र सोपाधावेकव्यक्तिकस्य सम्भवतोऽप्युपाधेर्द्धर्म्मान्तरविशिष्टत्वादिना अभावो भवत्येव साध्यसमानाधिकरण इत्यवच्छेदकानुसरणम् ॥ १३ ॥

साधनसमानाधिकरणात्यन्ताभावप्रतियोगिताव--

---

नेऽपि यावत्त्वं विहायाभावे यावत्त्वं खण्डयति, तादृशेति। तथा अप्रसिद्धिरित्यर्थः। नानाहेत्वधिकरणकस्थले तादृशानां यावदभावानां चालनीन्यायेन समवस्थितानामधिकरणमप्रसिद्धमिति। एकाधिकरणहेतुस्थले तु तस्मिन्नेवाधिकरणे तादृशा यावन्तो भावा इत्युक्तं, प्रायश इति। अथ यावदभावानां प्रत्येकाधिकरणावृत्तित्वं साध्यस्य वक्तव्यमित्यत आह, रूपादीति। अतएव विशदयति, क्वापीति। इदञ्च घटरूपे यावन्मध्यपतितस्य घटत्वाभावस्य सामानाधिकरण्याभाव इति क्रमेणोन्नेयम्। सर्व्वत्रेत्यादि। आर्द्रेन्धनादीनां चालनीन्यायेन धूमवत्त्यभावसम्भवेऽपि व्यभिचाराधिकरणे भिन्नत्वस्याभावो धूमवतीति ग्रन्थकार्थः। विशिष्टत्वादिनेत्यादिपदेन द्वित्वपरिग्रहः ॥ १३ ॥

तदपि विशिष्टस्यातिरिक्तत्वमतालम्बनानुरोधादेव उक्तविव-

च्छेदकावच्छिन्नप्रतियोगिताका यावन्तोऽभावा यद्धर्म्मा-वच्छिन्न-समानाधिकरणास्तद्धर्म्मावलीढ़--सामानाधिक-रण्यमित्यर्थः। अभावश्चात्र भावभिन्नो ग्राह्यस्तेन इदं जलं स्नेहवत्त्वादित्यादौ स्नेहवत्त्वसमानाधिकरणा-त्यन्ताभावप्रतियोगितावच्छेदकरूप-सामान्याभावत्वाव-च्छिन्नप्रतियोगिताकाभावानां सकलरूपाणां जलत्व-

---

च्छायां मूलाक्षरासमर्थनादाह, साधनेत्यादि। तथाच मूलेऽभाव-सामानाधिकरण्यमित्यत्र बहुव्रीहिराश्रयणीयः, एतद्विवक्षायान्तु रूपवान् पृथिवीत्वादित्यत्र यावत्सु अभावेषु रूपत्वावच्छिन्नसामा-नाधिकरण्यं वर्त्तत एव। भावभिन्न इति। रूपप्रागभावाभावत्वाव-च्छिन्नाभावस्य यावद्रूपप्रागभावात्मकस्य साध्यसामानाधिकरण्याभा-वात् स एव दोष इत्यतोऽभावपदं अत्यन्ताभावपरं बोध्यम्। तेने-त्यादि भावभिन्नोऽत्यन्ताभावो ग्राह्यस्तेन प्राचीननये रूपप्रागभाव-रूपध्वंस रूपयावदभावेषु साध्यसामानाधिकरण्याभावेऽपि नोक्त-दोषः। ननु तथापि जलावृत्तित्वाऽवच्छिन्नाभावाऽन्यतराभावत्वा-वच्छिन्नप्रतियोगिताकयावन्मध्यपतिते तेजोवृत्तित्वावच्छिन्नाभा-वस्य न जलवृत्तित्वसामानाधिकरण्यमिति पुनरव्याप्तिरिति चेत्, तादृशावच्छिन्न-प्रतियोगिताकाभावत्वव्यापकसाध्यसमानाधिक-रणवृत्तित्वकत्वस्य विवक्षितत्वात्। अत्र रूपसामान्याभावस्य स्नेह-समानाधिकरणात्यन्ताभावप्रतियोगित्वं जलपरमाणुमादाय बोध्यं, जलावयविन्युत्पत्तिकाले तत्सत्त्वाभ्युपगमात्। न च तथापि स्नेह-

सामानाधिकरण्यविरहेऽपि नाव्याप्तिः। घटध्वंसो ध्वंसत्वादित्यादौ च घटध्वंसत्वादेस्तत्प्रकारकप्रमाविशेष्यत्वादेर्वा भावाभाववृत्तिरतिरिक्तोऽभावस्तादृशो न घटध्वंसत्वादिसमानाधिकरण इति नातिव्याप्तिरित्यपि वदन्ति ॥ १४ ॥

---

वत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकजलावृत्तित्वावच्छिन्नाभावहेतोरवृत्तित्वावच्छिन्नाभावान्यतरत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगिताकस्य तेजो वृत्तित्वावच्छिन्नाभावस्य जलत्वसामानाधिकरण्यविरहादव्याप्तिरिति वाच्यम्। स्वसमानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वत्वव्यापकसाध्यतावच्छेदकावच्छिन्न-साध्यसमानाधिकरणवृत्तित्वकत्वस्यानेन विवक्षितत्वात्। एवं चाभावेषु भावभिन्नत्वविवक्षणं यथाश्रुताभिप्रायेणेति बोध्यम्। ननु घटध्वंसो ध्वंसत्वादित्यत्र तादृशाभावस्तत्घटध्वंसत्वाभावा एव, ते च स्वाधिकरणघटात्यन्ताभावादिभ्यो नान्नातिरिच्यन्ते, तेषु घटध्वंसत्वसामानाधिकरण्यसत्त्वादतिव्याप्तिरित्यत आह, घटध्वंस इति। अत्र यद्यपि पटध्वंसस्यापि घटध्वंसत्वाभावरूपतया घटध्वंसत्वासमानाधिकरणतया च नातिव्याप्तिसम्भावना, तथापि घटध्वंसत्वाभावस्याधिकरणस्वरूपत्वे आधाराधेयभावानुपपत्तिरितिभयेन समानाधिकरणाभावैरेव तथा धीरिति ये वर्णयन्ति तेषां मतमवलम्ब्येदमुक्तमिति

यावदिति। स्वं व्यभिचारि येषां तेषां यावतां व्यभिचारिणा साध्येन सामानाधिकरण्यमित्यर्थः। यावदिति। यत्पदं साध्यत्वाभिमतपरं, सोपाधिवारणाय यावदिति लुप्तसप्तमीकस्य द्वितीयात्यन्ताभावस्य विशे-

---

ष्येयम्। प्राचीननये घटध्वंसत्वस्य घटध्वंसरूपत्वादाह, तत्प्रकारकेति। तत्र यद्यपि विषयत्वं स्वरूपमेव तथापि प्रमास्वरूपमेव तद्बोध्यम्। अतिरिक्त इति। घटध्वंसत्वं नास्तीति धीस्तावदनुगताकारा तस्याश्च तावत् स्वरूपनियम्यत्वे गौरवमित्यतिरिक्त एवाभावः कल्प्यत इति। न च तत्रापि घटध्वंसत्वं नास्तीति धीसत्त्वादतिरिक्तकल्पनेऽनवस्थाऽनतिरिक्तकल्पने आत्माश्रय इति वाच्यम्। एवम्बिधदोषेण घटाभावोऽपि लुप्येत तत्रात्माश्रयोऽन्यथानुपपत्त्यैव बोध्य इति चेदिहापि समानमिति भावः॥ १४॥

यथा श्रुतमूले वह्निमान् धूमादित्यत्र धूमीययावद्व्यभिचारिमध्यपतितस्य वह्निद्रव्यत्वादेर्व्यभिचारित्वं कदापि न वह्नाविति भयेन व्याचष्टे, स्वमिति। तथाच बहुव्रीह्यन्तस्वव्यभिचारिपदेन समं यावत्पदस्य कर्म्मधारयो बोध्यः। अनन्तरं च षष्ठीसमास आश्रयणीयः। लुप्तसप्तमीकस्येत्यादिषष्ठीद्वयं वैयधिकरण्येन, तथाच लुप्तसप्तमीकस्य पदस्य योऽर्थो द्वितीयात्यन्ताभावः तद्विशेषणमिति। तथाच लुप्तसप्तमीकस्येति ज्ञाप्यज्ञापकभावे षष्ठी, सामानाधिकरण्ये तु अर्थस्य लुप्तसप्तमीकत्वाभावात्, पदस्य च विशेषणत्वाभावादसङ्गतिरिति भाव्यम्। केचित्तु वैयाकरणरीत्या पदयोरेव विशेषणवि-

न ह्येवं सोपाधिः, तत्र साधनसमानाधिकरणा-त्यन्ताभावप्रतियोगिन आर्द्रेन्धनवत्त्वादेरुपाधेर्योऽत्यन्ता-भावस्तेन समं साध्यस्य धूमादेः सामानाधिकरण्या-भावात्, उपाधेः साध्यव्यापकत्वात् एतदेव यावत्-स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यमनौपा-धिकत्वं गीयते ।

---

षणम् । तथाच साध्यव्यापकतावच्छेदकावच्छिन्नप्रति-योगिताकात्यन्ताभावत्वव्यापक-स्वसामानाधिकरण्यसा-मान्याभावकत्वमर्थः । केवलान्वयिस्थले त्वाकाशादि-

---

शेषभाव इति मतेनेदमित्याहुः । तथाचेत्यादि । यावदित्यस्यैव व्यापकत्वमित्यर्थः । तत्प्रयोजनं तु धूमवान् वह्नेरित्यत्र द्रव्यत्वाभावे वह्निसामानाधिकरण्यसामान्याभावसत्त्वादतिव्याप्तिरिति तद्वारणम् । तत्रैवार्द्रेन्धनाद्यभावे रासभनिष्ठसामानाधिकरण्यस्याभावसत्त्वादति-व्याप्तिरिति सामान्यपदोपादानम् । अत्र व्यापकत्वमध्ये चेत् प्रति-योगिव्यधिकरणपदं निक्षिप्यते, तदा द्वितीयाभावे तदवश्यं देयं, अन्यथा द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ संयोगाभावे तत्सामानाधिकरण्यसत्त्वादव्याप्तिरिति, एतन्निष्कर्षस्य व्याप्तिलक्षण-वद्वोध्यः । उभयत्रैव तद्दानमिति तु सम्यगिव प्रतिभाति ; सम्प्र-दाय इत्यस्वरसोद्भावनं तद्वीजन्तु द्रव्यं पृथिवीत्वादित्यादौ गुणवृत्ति-त्वविशिष्टसत्ताद्यभावस्य द्रव्यत्वव्यापकस्य योऽभावः सत्तारूप-

रेव तथाविधोऽभावः प्रसिद्ध इति सम्प्रदायः। केचित्तु तादृशयावदभावशून्यत्वं यदधिकरणताया व्यापकं तत्त्वमर्थः। न च तादृशप्रतियोगितानवच्छेदकवन्तमेव यावत्त्वेन विशिष्य यावत्तादृशाश्रयत्वं यदधिकरणताया व्यापकं तत्त्वमित्यर्थलाभादेव सामञ्जस्येऽभावद्वयो-पादानमनतिप्रयोजनकमिति वाच्यं, यावतां तादृशा-मिन्धनादीनामैकाधिकरण्यस्याप्रसिद्धेः। न चावच्छेद-कांशमपहायाप्रतियोग्येव यावत्त्वेन विशिष्यतां साध्य-व्यापकस्यापि रूपान्तरेण साध्यसमानाधिकरणात्यन्ता-भावप्रतियोगित्वस्योपदर्शितत्वादित्याहुः ॥ १५ ॥

---

स्तस्मिन् हेतुसामानाधिकरण्यसत्त्वादव्याप्तिरिति, इदमेव दोष-मुद्धरन्नाह, केचित्त्विति। तादृशाः साध्यव्यापकत्वावच्छेदकाव-च्छिन्नप्रतियोगिताका यावन्तोऽभावाः, प्रत्येकं तच्छून्यत्वं यदधि-करणताया व्यापकत्वं तत्त्वमित्यर्थः। यावत्त्वावच्छिन्नशून्यत्व-विवक्षणे धूमवान् वह्नेरित्यत्रातिव्याप्तिस्तत्रापि वह्निमत्ययोगोलके आर्द्रेन्धनाभाववत्यपि द्रव्यत्वाभावाभावेन तादृशशून्यत्वसत्त्वादिति, अनतीति। यावत्त्वस्याभावविशेषणस्य व्यापकासंस्पर्शादिति यथा-सन्निवेशे वैयर्थ्याभावादिति भावः। न चेत्यादिपूर्व्वकल्पे यावदा-श्रयत्वस्य व्यापकत्वमतोऽप्रसिद्धिः। अत्र तु अप्रतियोगिनां व्याप-कत्वे तत्र रूपान्तरेणापि निर्व्वहतीति नाप्रसिद्धिरिति ध्येयम्।

यद्वा यावद्यत्समानाधिकरणात्यन्ताभावाप्रतियोगिप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वं, सोपाधौ तु साध्यवन्निष्ठात्यन्ताभावाप्रतियोगिन उपाधेर्योऽत्यन्ताभावस्तेन समं हेतोः सामानाधिकरण्यम् उपाधेः साधनाव्यापकत्वात्। यद्वा यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः।

---

साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदके यावति यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वं नास्ति तत्त्वमर्थ इति तु नव्याः। अवच्छिन्नं सामानाधिकरण्यं सामानाधिकरण्यावच्छेदकरूपं वा

---

रूपान्तरेणेति। प्रमेयत्वादेरपि गगनादिवृत्तित्वेन घटवृत्तित्वविशिष्टत्वादिना चाभावस्य सुलभत्वादिति, अत्र च साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकानि यावन्ति यत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकानीति तु स्फुटतया पूर्व्वोक्ततया च नोदङ्कितमिति ध्येयम् ॥ १५ ॥

संयोगेन सामानाधिकरण्यमभिप्रेत्याह, धूमत्वेति। समवायेन सामानाधिकरण्यमभिप्रेत्याह, द्रव्यत्वत्वादेरिति। यद्वा पूर्व्वं नानासामानाधिकरण्यस्यावच्छेदकं दर्शितं इदानीन्तु एक-

व्याप्तिः । इत्थञ्च धूमत्वद्रव्यत्वत्वादेर्व्याप्यतावच्छेदकत्वं दण्डत्वादेर्नियतपूर्व्ववर्त्तितावच्छेदकधर्म्मात्मककारण-तावच्छेदकत्ववदभेदेऽप्युपहितानुपहितभेदाद्वा समर्थ-नीयं, तत्राद्यमभिप्रेत्याह । यत्सम्बन्धितेति । सा सम्बन्धिता सामानाधिकरण्यरूपा जनकत्वादिव्यावृत्ता, अत्र च विशिष्टसत्तात्वाद्यवच्छिन्नगुणादिसामानाधि-करण्याधिकरणसत्त्वादेः कर्म्मादौ परामर्शाद्गुणाद्यनु-मित्यापत्तेः ॥ १६ ॥

साध्यसामानाधिकरण्यविशिष्टहेतुमत्तापरामर्शस्तु

---

व्यक्तिके एकसामानाधिकरण्येऽप्यवच्छेदकं स्फोरयितुमाह, द्रव्य-त्वत्वेति । दण्डत्वादेरिति । नियतपूर्व्ववर्त्तित्वमात्रस्य कारण-त्वेऽरण्यस्थदण्डस्याकारणत्वप्रसङ्गः । नन्वभेदेऽप्यवच्छेद्यावच्छेदक-भावे दण्डो दण्ड इत्यपि प्रतीतिः स्यादित्यत आह, उपहि-तेति । शुद्धं धूमत्वमवच्छेदकं सामानाधिकरण्यावच्छेदकत्वोप-हितन्त्ववच्छेद्यमिति भावः, तादात्म्यसम्बन्धसंग्रहायाह, जनक-त्वादीति । तथाच तेन व्याप्यव्यापकभावेऽपि न क्षतिरिति भावः । अत्र चेत्यादि व्याप्तिविशिष्टहेतुमत्त्वं पक्षे मृग्यं, व्याप्तिश्च विशिष्ट-सत्तात्वावच्छिन्नसत्तानिष्ठसामानाधिकरण्यं तद्वती च सत्ता-कर्म्मनि वर्त्तते एवेति भावः ॥ १६ ॥

अथ व्याप्त्युपहितव्याप्यवत्त्वमेव तथा वक्तव्यं, व्याप्तिश्च तादृश-

तथाहि धूमस्य वह्निसम्बन्धित्वे धूमत्वमवच्छेदकं धूममात्रस्य वह्निसम्बन्धित्वात् वह्नेस्तु धूमसम्बन्धे न वह्नित्वमवच्छेदकं, धूमासम्बन्धिनि गतत्वात् न ह्यतिप्रसक्तमवच्छेदकं, संयोगादौ तथात्वादर्शनात्, किन्तु वह्नावार्द्रेन्धनप्रभववह्नित्वं धूमसम्बन्धितावच्छेदकं तादृशञ्च व्याप्यमेव।

---

पक्षे साध्यनिर्णयात् प्रागसम्भवीत्यनुशये न द्वितीयम्, अयमालोको धूमो वेत्यादौ विशिष्यसन्देहेऽपि सामान्यतोऽवच्छेदकरूपवत्त्वनिर्णयः सम्भवत्येवेति हृदयम्। अत्रावच्छेदकत्वं नान्यूनवृत्तित्वम् अन्यूनानतिरिक्तवृत्तित्वं वा, वह्न्यादौ साध्ये मेयत्वादावतिप्रसङ्गात् धूमत्वादावप्रसङ्गाच्च, किन्त्वनतिरिक्तवृत्तित्वं तच्च यद्यपि न तदभाववद्वृत्तित्वं, गुणवान् सत्त्वादित्यत्र सत्तात्वे-

---

सामानाधिकरण्यरूपेत्यत आह, साध्येति। प्रागिति। तथाच पक्षे साध्यानिर्णयेऽपि यदनुमितिर्भविष्यति तन्न स्यादिति भावः। न तु भिन्नसाधनाभिप्रायेण तद्योजनीयं, भिन्नप्रकारकसाध्यनिर्णयेऽपि यदनुमानमादायापि तथोपपत्तेरिति। नन्वयमालोको धूमो वेत्यादौ धूमत्वालोकत्वादेरवच्छेदकस्यानिर्णयात् कथं तत्रानुमितिः, कथं वा तेनैव मीमांसकमतनिराकरणं इत्यत आह,

ऽतिप्रसङ्गात्, न च कर्म्मादिवृत्तित्वावच्छेदेन गुणसामानाधिकरण्याभाववत्यां सत्तायां वर्त्तमानत्वान्न तथा, तथा सति विशिष्टसत्तात्वे प्रागुपदर्शितदिशा च धूमत्वादावव्याप्तिप्रसङ्गात्, तथापि अतिरिक्ते यद्धर्म्मविशि-

अयमालोक इति। सामान्यत इति। (१)साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वेन तयोर्निर्णयादित्यर्थः। विशिष्टेति धूमत्वलेनालोकत्वत्वेन सन्देहेऽपीत्यर्थः। सामानाधिकरण्यावच्छेदकविशिष्टवान् पर्व्वतोऽयमित्येव परामर्शाभ्युपगमादिति भावः। आद्ये मेयत्वेति उभयत्राह, धूमत्वेति। सार्व्वभौममतमाशङ्क्य निराकुरुते, न चेति। न च तथा न तदभाववदवृत्तित्वम्। अथ तन्मते विशिष्टं तावदतिरिक्तमेवेत्यत आह, प्रागिति। धूमावयवे धूमेन वह्निसामानाधिकरण्यमिति प्रतीतेर्धूमेऽपि तदभावसत्त्वात् धूमत्वस्य तथात्वं व्याहतमित्यर्थः। अतिरिक्त इति। अतिरिक्तत्वावच्छेदेनेत्यर्थः, तेन धूमवान् वह्नेरित्यादौ कस्यचिदतिरिक्तस्य जलत्वादेर्वह्नित्वविशिष्टवह्न्यधिकरणावृत्तित्वेऽपि धूमाभावस्य तथाविधस्य वह्नित्वविशिष्टवदयोगोलकवृत्तित्वान्नातिव्याप्तिः। केवलान्वयिनि तु साध्यसामानाधिकरण्याभाववान् गगनादिरेव (२)बोध्यः, अत्र चावृत्तित्वमित्यत्रापि वृत्तित्वसामान्याभावो बोद्धव्यः, तेन

(१) इंलण्ड पुस्तकालयस्थ पुस्तके—सामान्यत इत्यादि परामर्शाभ्युपगमादितिभाव इत्यन्त पाठो नास्ति।

(२) इं पुस्तके—इति बोद्धव्यम्।

ष्टहेत्वधिकरणावृत्तित्वं न वर्त्तते, तत्त्वं साध्यासमानाधिकरणावृत्तित्वविशिष्टाधिकरणावृत्तित्वसामान्यकत्वं स्वविशिष्टाधिकरणावृत्ति-यावत्साध्यासमानाधिकरणत्वमिति तु फलितार्थः। सत्तात्वविशिष्टसत्ताधिकरणकर्म्मादिवृत्तित्वस्य साध्यासमानाधिकरणे कर्म्मत्वादौ

---

रासभादिनिष्ठस्यायोगोलकवृत्तित्वविशेषस्य धूमाभावादावभावेऽपि न क्षतिः। ननु सार्वभौममते सत्ताया अप्यतिरिक्तत्वं गुणावच्छेदेन द्रव्यत्वसामानाधिकरण्याभाववत्त्वात्, तथाच द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वादित्यादौ गुणकर्म्मान्यसत्तात्वावच्छिन्नसत्ताधिकरणवृत्तित्वस्य तत्र सत्त्वादव्याप्तिरित्यत आह, साध्यासमानाधिकरणेति। तथाचातिरिक्तत्व साध्याधिकरणानधिकरणत्वमेव भेदघटितं, तच्च तत्र नास्तीति नाप्रसङ्गः। एतत्समन्वयस्तु वह्न्यसमानाधिकरणादिषु(१) न वर्त्तत एव धूमत्वविशिष्टाधिकरणवृत्तित्वसामान्यमिति बोध्यं, (२) अवृत्तिरित्यत्र तादृशवृत्तित्वसामान्याभावो बोध्यः, स्वं लक्ष्यत्वेनाभिमतम्, सामान्यपदप्रयोजनं तूक्तमेव प्राक्। ननु साध्यासमानाधिकरणावृत्तीत्यत्र वृत्तित्वस्याधिकस्य प्रवेशेन गौरवादाह, स्वविशिष्टेति। अन्यत्सर्वं व्याख्यातमेव। द्रव्यं सत्त्वादित्यत्रातिव्याप्तिं खण्डयन्नाह, सत्तात्वेति। विशिष्टसत्त्वे हेतावव्याप्तिं खण्डयन्नाह, कर्म्मा-

---

(१) ङ, पुस्तके—वह्न्यसमानाधिकरणह्रदत्वादिषु।

(२) ङ, पुस्तके—इति दिशाबोद्धव्यः।

सत्त्वान्नातिप्रसङ्गः कर्म्मादान्यत्वविशिष्टसत्ताश्रयस्य न कर्म्मादिरिति नाप्रसङ्गः, एवञ्च मेयत्वादेरपि केवलान्वयिसामानाधिकरण्यावच्छेदकत्वोपपत्तिः। यत्तु वृत्तिमत्त्वादिकमेव तत्र व्याप्तिस्तद्ग्रहस्तु मेयत्वादिनेति तन्न, व्याप्तिविरहिवृत्तितया गृह्यमाणेन रूपेण व्याप्तिग्रहासम्भवात् अन्यथा अतिप्रसङ्गात्, साध्यतावच्छेदक-

---

द्यन्यत्वेति । एवम् ईदृशावच्छेदकत्वनिर्वचने । मेयत्वादेरिति, इदं वाच्यं मेयत्वादित्यादौ, मेयत्वविशिष्टमेयाधिकरणावृत्त्येव वाच्यत्वासमानाधिकरणं (१) गगनादिकं यावदिति मैथिलमतं दूषयन्नाह, यत्त्विति। तैरुक्तमपि मेयत्वं वैयर्थ्यादेव दूरीकृत्यवृत्तिमत्त्वमात्रमुक्तम्, अन्यथेति व्याप्तिविरहिवृत्तितया गृह्यमाणेनापि व्याप्तिग्रह इत्यर्थः। अतिप्रसङ्गादिति । वह्न्यादौ साध्ये द्रव्यत्वादिनापि व्याप्तिग्रह आपद्यत इत्यर्थः। ननु कथमेतत् द्रव्यत्वस्यातिरिक्तवृत्तितया ग्रहणे व्यभिचारग्रहस्य बाधकस्य सत्त्वात्, मेयत्वे तु न तथेति चेन्न, व्यभिचारास्फूर्त्तावप्यवच्छेद्याभाववद्वृत्तितया गृह्यमाणेनावच्छेदकत्वभावग्रहस्यानुभविकत्वादिति। न चावच्छेद्याभाववद्वृत्तित्वग्रहे व्यभिचारग्रह आवश्यकः, तस्य विभिन्नग्रहसामग्रीकत्वादिति। साध्यतावच्छेदकेत्यादि । साध्यतावच्छेदकसम्बन्धविवक्षणप्रयोजनं तु समवायावच्छिन्नवह्निसाध्यकधूमाति-

---

(१) इ, मेयत्वासमानाधिकरणम्।

सम्बन्धेन साध्याधिकरणे येन येन सम्बन्धेनावर्त्तमानत्वं, हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणेऽपि तेन तेन तथात्वं बोध्यम् ॥ १७ ॥

नीलधूमत्वादेर्वारणीयत्वे तु स्वसमानाधिकरणा-तादृशधर्म्मान्तराघटितत्वेन विशेषणीयं सामानाधिकरण्योपादानाद्धूमप्रागभावत्वादिसंग्रहः, तद्घटित-

---

व्याप्तिवारणम्। द्रव्य सत्त्वादित्यादौ साध्याधिकरणमध्यपतित-महाकाले सम्बन्धसामान्येनावर्त्तमानं गगनादिकमेव, तच्च हेत्व-धिकरणेऽप्यवर्त्तमानमेवेत्यत आह, येनेति(१)। तथाच गुणत्वादि-कमादायैव तत्र नातिप्रसङ्गः। वह्निमान् धूमादित्यादौ वह्न्यधि-करणे समवायसम्बन्धेनावर्त्तमानस्य धूमावयवस्य समवाय-सम्बन्धेन धूमाधिकरणे वर्त्तमानत्वादाह, हेतुतावच्छेदकसम्बन्धे-नेति। तथाच तेन सम्बन्धेन धूमवति पर्व्वतादौ समवायेन तस्यावर्त्तमानत्वमेवेति भावः। तथात्वमिति हेत्वधिकरणा-वृत्तित्वमित्यर्थः ॥ १७ ॥

वारणीयत्वे त्विति। येषां मते पारिभाषिकं व्याप्यताव-च्छेदकत्वमक्षुसमेव नीलधूमत्वस्य, किन्तु तया प्रयोक्तुरधिकेनैव निग्रह इति, तन्मते वह्निर्भावस्थलो न बोध्यः (२) स्वसमानाधिकर-णेति। तथाच नीलधूमत्वे धूमत्वमेव तादृशो धर्म्मः, धूमेति। धूम-त्वस्य प्रागभावावृत्तित्वेन व्यधिकरणत्वाद्विशिष्टाभावस्तत्राक्षुम इति

त्वञ्च तदविषयकप्रतीतिविषयत्वं, स्वरूपसम्बन्धविशेष एवावच्छेदकत्वम्, अतएव न ह्यतिप्रसक्तमवच्छेदकमित्यादिकमपि सङ्गच्छते, अन्यथातिप्रसक्तो अनतिप्रसक्तत्वस्याप्रसक्तत्वेन तन्निराकरणायोगात्, विरुद्धयो-

भावः । ननु नीलधूमत्वस्य कथं धूमत्वघटितत्वं, नीलधूमत्वस्य धूमत्वाजन्यत्वादित्यत आह, तदघटितत्वमिति । तदविषयकेति । प्रतीतिर्लौकिकालौकिकसाधारणी, नीलधूमत्वविषयकं यज्ज्ञानन्तदवश्यं धूमत्वमवगाहते, प्रमेयत्वेनापि तज्ज्ञानस्य धूमत्वविषयकत्वात्, धूमत्वादन्यस्य नीलधूमत्वस्याभावात् । न च धूमत्वेप्यवच्छेदकत्वव्याकोपः, धूमत्वस्यापि धूमत्वाविषयकप्रतीत्यविषयत्वेन तद्घटितत्वादिति (१) वाच्यम्, अन्तरपदेनैव तद्वारणात् तस्य च स्वभिन्नार्थकत्वात् । मिश्रमतमुद्घाटयति, स्वरूपसम्बन्धेति । अतएवेति । यतएवानतिप्रसक्तत्वमवच्छेदकत्वं परित्यक्तमित्यर्थः । अन्यथा तदपरित्यागे, अयोगादिति तदभाववति तद्वत्वभ्रमस्यात्यन्तमसम्भावितत्वादिति, भ्रमखण्डनार्थमेव शब्दप्रयोगस्य सार्थकत्वादिति,(२) गुणवत्सत्वादित्यत्र सत्तात्वस्यावच्छेदकत्वाभावं दर्शयितुमाह, विरुद्धयोरित्यादि । तथाच विरुद्धयोः साध्यसाध्याभावयोः अधिकरणे एकसम्बन्धेन यद्विशिष्टो वर्त्तते स च

(१) इ॰, तदघटितत्वाभावादिति ।

(२) इ॰, गुणवत्सत्वात् इत्यतः सामानाधिकरण्यावच्छेदक इत्यर्थः एतावत्पर्य्यन्तं नास्ति ।

भाविभावायोरधिकरणे एकस्यैकेन सम्बन्धेन वृत्ति-
र्विरुध्यते, अतस्तत्रावच्छेदकभेदापेक्षा, अतएव व्यभि-
चारिणि साध्यवदभावसामानाधिकरण्ययोर्विरुद्धयोरु-
पपादनायोपाधितदभावावच्छेदकावनुमन्यन्ते न्याया-
चार्य्याः। सत्तात्वन्तु गुणाद्यभावस्येव गुणस्यापि न
सामानाधिकरण्यावच्छेदकं विरोधात्। अव्याप्यवृत्तेश्च
कपिसंयोगादेरधिकरणे वृक्षादौ तद-भावस्य संयोगेन
च वह्नेरधिकरणे महानसादौ समवायावच्छिन्नप्रति-
योगिताकतदभावस्य सत्त्वेनाविरुद्धत्वात्। वह्निमति
च संयोगेन वर्त्तमानस्य धूमादेर्वह्न्यभाववति स्वाव-

---

धर्म्मो नोभयोरेकस्यापि सामानाधिकरण्यावच्छेदक इत्यर्थः।
एकस्येति एकधर्म्मावच्छिन्नस्येत्यर्थः, तेन धूमवान् वह्नेरित्यत्र
वह्नेर्नानात्वेऽपि न क्षतिः। प्रत्यवयवव्यावृत्तिस्त्वग्रे स्वयमेव
स्फुटीकरिष्यति। अवच्छेदकस्यावश्यकत्वे परमेषामनुमितिं दर्श-
यति, अतएवेति। विरोधादिति। तथाच विनिगमनाविरहेण न
कस्याप्यवच्छेदकत्वमिति भावः। विरुद्धयोरित्यस्य फलमाह, अ-
व्याप्यवृत्तेरिति। ननु संयोगसंयोगाभावयोरवच्छेदकं शाखादिरूपं
भिद्यत एवेति विभिन्नावच्छेदकौ तौ दर्शयित्वाऽविरुद्धावच्छेदकौ
तौ दर्शयति संयोगेन चेति, अनयोस्त्वेकावच्छेदेनापि वृत्ति-
र्ध्येया। एकेन सम्बधेनेत्यस्य फलमाह, वह्निमतीति। ननु तद्धर्म्म-

यवे संयोगेनावर्त्तमानत्वाच्च तद्वृत्तत्वधूमत्वादेर्न साध्यसामानाधिकरण्यावच्छेदकत्वविरोधः । व्यभिचारधीरप्येतद्व्याप्तिबुद्धौ विरोधिन्येव तद्धर्म्मविशिष्टस्य साध्यानधिकरणवृत्तित्वग्रहे तदवच्छेदेन साध्याधिकरणवृत्तित्वग्रहायोगात्, अस्तु वा एतन्मते हेतुवृत्तिधर्म्मस्य साध्यसामानाधिकरण्यानवच्छेदकत्वमेव व्यभिचारः तद्धीरेव साक्षाद्विरोधिनी व्यभिचारान्तरधीस्तु परम्परयेति नीलधूमत्वादिकन्तु गौरवान्नावच्छेदकम्, एवञ्च लघुघटत्वादिकमेव सामानाधिकरण्यावच्छेदकं व्याप्तिः । न तु तत्सहचरितकम्बुग्रीवादिमत्त्वादिकं, तेन च गुरुणापि रूपेण व्याप्तिग्रहे कथायां हेतोरुपन्यासे वानुयोगः प्रकारान्तरव्याप्तिवादिनामपि समानः । एवं द्रव्यं रूपात् रसादित्यादौ

---

विशिष्टस्य साध्यानधिकरणवृत्तित्वग्रहेऽपि तदवच्छेदेन साध्याधिकरणवृत्तित्वग्रहो न दुर्घटः ग्राह्याभावास्पर्शादित्यत आह, अस्तु वेति । परम्परयेतीति । एतदुन्नायकत्वेनेत्यर्थः । व्याप्त्यन्तरवादिनां साम्यमुद्घाटयति एवञ्चेत्यादिना, व्याप्तिग्रहे इति स्वार्थपरार्थाभिप्रायेण परार्थस्थलेत्वाह, कथायामिति । प्रकारान्तरं हेतुसामानाधिकरण्येत्यादिरूपम्, अत्र मते दूषणमुद्घाटयितुं तुल्ययुक्त्या लाघवेनान्यत्राप्यवच्छेदकं निर्द्धारयति, एवमिति ।

सकलगुणसाधारणस्य गुणत्वस्य द्रव्यत्वादिसाधारणस्य गुणासमवेतत्वे सति द्रव्यसमवेतत्वस्य वैकस्यावच्छेदकत्वसम्भवे बहूनां रूपत्वादीनां न तत्त्वं विरुद्धधर्म्मद्वयाधिकरणयोश्च एकस्यैकेन सम्बन्धेन वृत्तौ कथं विरोधः, कथं वा द्रव्यत्वादौ साध्ये हेतुत्वेन विशिष्टरूपादेः प्रयोगः, तथा परामर्शद्वानुमितिरिति विभावनीयम् ॥ १८ ॥

---

सर्व्वसाधारण्यायगुणत्वमपेक्ष्याह, द्रव्यत्वादीति। गुणासमवेतत्व इति। एतेन सत्ताव्यावृत्तिः विशेष्यदलेन कर्म्मत्वादिव्यावृत्तिः। न चात्र रूपासमवेतत्वादिभ्योऽपि सत्तावारणे विनिगमनाविरहात्तावतां गुणानां (१) नीलाद्यनुधावनेन च नानात्वावधारणे बहूनामपि हेतुत्वमापतितं, तथाच तदपेक्ष्य रूपत्वादिकमेव सम्यक्, गुणत्वस्य सामान्यत्वेऽप्यखण्डतया तुल्यत्वादिति वाच्यं, परम्परावच्छेदकत्वकल्पने विनिगमकतया सर्व्वसाधारणस्य गुणासमवेतत्वस्यैव सम्यक्त्वात्। अतएव तुल्यमपि कास्रयत्वादिकमपहाय शब्दाश्रयत्वमेवाकाशपदशक्यतावच्छेदकं स्वयमेव गुणटिप्पन्यां व्यवस्थापितम्। यद्वात्र वाकारोऽनास्थायां सर्व्वसाधारणं गुणत्वमेव पूर्व्वोक्तं सम्यगिति एतन्मतं दूषयति, विरुद्धधर्म्मद्वयेति। तादृशव्याप्तेरप्रयोजकत्वादित्यर्थः। (२) तथाच द्रव्यं सत्त्वादित्यत्र

---

(१) इं, नीलाद्यनुधावनेन च नानात्वावधारणे एतत् पाठो नास्ति।

(२) इं, तथाचेत्यादि स्यादिति भाव इत्यन्तः पाठो नास्ति।

अपरे तु यद्धर्म्मविशिष्टहेत्वधिकरणत्वं साध्याधिकरणताया अवच्छेदकं सधर्म्मो व्याप्तिः, ग्रन्थस्तु धूमस्य धूमवतः, धूमत्वं धूमवत्त्वं, वह्निस्तु वह्निमतस्त्वित्यादिप्रकारेण व्याख्येयः। अत्र चावच्छेदकत्वं न स्वरूपसम्बन्धविशेषः, विरुद्धदिक्कालावच्छिन्नवृत्तिकस्य न्यूनदेशकालवृत्तिकादेश्चाधिकरणतायां तदसम्भवात्तुल्यवृत्तिकधर्म्मद्वयाधिकरणत्वयोर्मिथोऽवच्छेद-

---

सत्तात्वमवच्छेदकं स्यादिति भावः। पूर्व्वोक्तमेवोद्घाटयति, कथं वेति। स्वार्थसाधारण्यायाह, तथेति ॥ १८ ॥

मिश्रोक्तं वस्तुतस्तु कल्पमुद्घाटयति, अपरे त्वित्यादि। गुणकर्म्मान्यत्वविशिष्टसत्तात्वसंग्रहाय, यद्धर्म्मेति। विरुद्धेत्यादि। विरुद्धत्वं देशे काले चान्वितं, तथाच विरुद्धदिगवस्थितयोर्विरुद्धकालावच्छिन्नयोः प्रतियोगितद्ध्वंसयोश्च सामानाधिकरण्येन व्याप्तौ नैकाधिकरणत्वमपराधिकरणतावच्छेदकं, तदनवच्छेदकेऽपि तद्वत्त्वप्रसङ्गात्। एवं वह्निमान् धूमादित्यत्र धूमाधिकरणं वह्न्यधिकरणापेक्षया न्यूनं नित्यनिरूपितजन्यनिष्ठव्याप्तौ जन्यकालोऽपि न्यूनो बोध्यः। तुल्येति। एतद्रूपवान् तद्रसादित्यादौ परस्परावच्छेद्यावच्छेदकभावेऽन्योन्याश्रयः, तथाच कुतः स्वरूपसम्बन्धरूपावच्छेदकत्वकल्पनास्त्विति (१) भावः। अत्र

---

(१) क, अवच्छेदकत्वकल्पनेति।

कभावस्य च नियन्तुमशक्यत्वान्नाप्यन्यूनवृत्तिकत्वं न्यून-वृत्तिकधूमादेरव्याप्यतापत्तेः। किन्त्वनतिरिक्तवृत्तित्वं स्वान्यूनवृत्तितत्कत्वमिति यावत्, अतो न केवलान्वयिन्यव्याप्तिः, अत्र च यदन्यूनवृत्तिसाध्यं तत्त्वं स्वव्यापकसाध्यसम्बन्धित्वपर्य्यवसन्नमपेक्ष्य गौरवं परमवशिष्यते तच्च ग्रन्थकार एवाग्रे विवेचयिष्यत इत्याहुः।

---

वदन्ति, अयमन्योन्याश्रय उत्पत्तौ ज्ञप्तौ वा नाद्यः तयोरजन्यत्वात् * नान्त्यः, एकतरग्रहाभावेऽपि सामान्यतोऽन्यतरग्रहेऽवच्छेद्यावच्छेदकभावपरिच्छेदेऽविरोधात्। ज्ञाने तथात्वेऽपि वस्तुस्थितावविरोधाच्चेति। वस्तुस्थितावेव ईदृशान्योन्याश्रयो दूषणावहस्तान्त्रिकैरङ्गीक्रियते इत्यपरे समादधुः। स्वान्यूनेति। स्वं हेत्वधिकरणता, (१) तत्साध्याधिकरणताव्याप्तहेतुवृत्तित्वाय-बहुव्रीह्यनुधावनम्। अत इति। (२) एतादृशविवक्षणादित्यर्थः। विवेचयिष्यत इति। ग्रन्थकारो लाघवादन्योन्याभावगर्भैवेत्यादावित्यर्थः। (३) ननु साधननिष्ठस्य साध्यसामानाधिकरण्यस्यावच्छेद-

---

* समकालीनयो रूपरसयोः परस्परं स्वजन्यजन्यत्वरूपापादकेन स्वस्य पूर्व्ववर्त्तिपूर्व्ववर्त्तित्वापादनरूपो य उत्पत्तावन्योन्याश्रयः अवच्छेद्यावच्छेदकभावकल्पने तादृशस्य अभावादिति भावः।

(१) इं, तत्साध्याधिकरणता इति नास्ति।

(२) इं, एतादृशविवक्षणादित्यर्थ इत्यादि ग्रन्थकारः इत्यन्तं नास्ति।

(३) इं, अन्योन्याभावगर्भैवेत्यादावित्यर्थः।

अथवा यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं तत्तस्य व्याप्यं, वह्निसामानाधिकरण्यं हि धूमे धूमत्वेनावच्छिद्यते, सौपाधौ तूपाधिना। अतएव साधनतावच्छेदकभिन्नेन येन साधनताभिमते साध्य-सम्बन्धोऽवच्छिद्यते, स एव तत्र साधने विशेषणमुपाधिरिति वदन्ति ॥ १६ ॥

---

उपाधिनेति। विशेषणतामापन्नेनोपाध्यनुप्रवेशेनेति यावत्, वह्नावार्द्रेन्धनप्रभववह्नित्वेन रासभार्द्रेन्धनादौ च तथाविधवह्निविशिष्टत्वेन धूमसम्बन्धेऽवच्छिद्यमाने तथाविधवह्नेरप्यनुप्रवेशात् रासभत्वादिकन्तु निविशते न वेत्यन्यदेतत्। अत्र चेदं स्नेहवत् निःस्नेहं वा

---

कत्वमुपाधेर्व्यधिकरणत्वादसम्भवीत्यत आह, विशेषणेतेति। तथाच विशेषणतया तस्य तदुपपत्तिरिति भावः। ननु रासभादौ तथाविधवह्निसमानाधिकरणत्वमवच्छेदकं, तत्र च उपाधेस्तथाविधवह्नेः साक्षाद्विशेषणत्वमनुपपन्नमित्यत आह, उपाधीति। अनुप्रवेशे वैलक्षण्यमाविष्कर्त्तुमाह, वह्नावित्यादि। आर्द्रेन्धनप्रभववह्नित्वे आधारतयाऽनुप्रवेशः, इतरयोस्तु सामानाधिकरण्येनेति आर्द्रेन्धने च कदाचिज्जनकत्वेनाप्यनुप्रवेशो घटत इति तस्य पृथगुक्तिः। ननु तद्विशिष्टरासभत्वेन सम्बन्धेऽवच्छिद्यमाने रासभत्वस्य वैय-

स्पर्शादित्यत्र विनाप्युपाधिप्रवेशं शीतत्वेन शीतान्यत्वेन वा साध्यासमानाधिकरणतया साधनव्यापकतया वा स्वयमनुपाधिना केवलेन विशेषणीभूय वा शीतान्यस्पर्शत्वेन चोपाधिना स्वत एव स्पर्शे साध्यसम्बन्धोऽवच्छिद्यत इत्युपाधिनैवेति नियमे न तात्पर्य्यं परन्तु शुद्धस्य साधनतावच्छेदकस्यानवच्छेदकतामात्रे यत एव

---

र्य्यादाह, रासभत्वादिकमिति। अन्यदेतदिति। तथाप्यनुप्रवेशेऽपि न हानिरिति भावः। अत्र चेति। न तात्पर्य्यमित्यनेनान्वयिसाध्यासामानाधिकरण्येन साधनव्यापकतया चानुपाधित्वावतारणाय उदाहरणद्वयं, साध्यासमानाधिकरणतयेत्याद्ये, साधनव्यापकतयेत्यन्त्ये, एतद्द्वयं स्वयमनुपाधिरित्यत्र (१) हेतुः, केवलेनेति। शीतत्वेन विशेषणीभूय वेति, शीतान्यत्वेन (शीतान्यत्वस्य स्पर्शत्वे विशेषणत्वादिति भावः,) शीतान्यस्पर्शत्वेन चेति चकारस्त्वर्थः। स्वत एवेत्येवकारेण विशेषणत्वं व्यवच्छिन्नं, यद्यप्यस्योपाधेर्न शुद्धसाध्यव्यापकता स्नेहाभावस्य साध्यस्य (२) गुणावृत्तित्वात्तथापि पृथिवीस्पर्शजलान्यतरत्वावच्छिन्नसाध्यस्य व्यापकता बोध्या। ननु अत्र प्रथमे तथास्पर्शनिष्ठसम्बन्धितायां शीतत्वमवच्छेदकं तथा जलत्वविशिष्टस्पर्शत्वमप्यस्तु, जलत्वस्य च उपाधित्वमुपपदमेव, द्वितीये च शीतान्यस्पर्शत्वेनावच्छिद्यमाने

---

(१) ख, स्वयमनुपाधिनेत्यत्र। (२) ख, द्रव्यादिवृत्तित्वादिति।

अतएव चतुष्टयः।

अतएव च साधनाव्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकत्वं लक्षणं ध्रुवं, व्यभिचारिणि-

सोपाधौ साधनतावच्छेदकातिरिक्तं नियतमवच्छेदकम्, अतएव तद्विशेषस्तत्रोपाधिरिति वदन्तीत्याह ॥ १९ ॥

अतएवेत्यादि। अत्रावच्छेदकत्वं सामानाधिकरण्येन तत्त्वव्याप्यन्यूनवृत्तित्वं व्यापकत्वमिति यावत्, तच्चाधि-

आर्द्रेन्धनप्रभववह्निवत्तत्र शीतान्यस्पर्शोऽप्यनुप्रविष्टः, स चोपाधिरेव, तृतीये तु उपाधिनैवावच्छिद्यत इत्यत्र न कापि क्षतिरिति चेन्नैवम्, उपाधिनैवावच्छिद्यत इति नियमेऽनुप्रविष्टोपाधित्वस्य यद्यवच्छेदकत्वव्यापकत्वं, तदा प्रथमे व्यभिचारो बोध्यः। अथानुप्रविष्टावच्छेदकत्वं व्याप्यं, उपाधित्वं व्यापकं, तत्र द्वितीये व्यभिचारो बोध्यः। अथावच्छेदकोपाधित्वं व्याप्यं, अनुप्रविष्टं व्यापकं, तत्र तृतीयमिति यावत्। तद्विशेषः साधनतावच्छेदकातिरिक्तसाध्यसम्बन्धितावच्छेदकविशेषः, तेन शीतत्वादिव्यावृत्तिः ॥ १९ ॥

ननु साधननिष्ठसाध्यसम्बन्धिताया व्यधिकरणस्योपाधेः (१) कथमवच्छेदकत्वमित्यत आह, सामानाधिकरण्येनेति। तथाच यत्सामानाधिकरण्यमवच्छेदकमित्यर्थः। यद्वा सामानाधिकर-

(१) इं, अनुप्रविष्टोपाधेः।

साधने एकत्र साध्यतदभावयोर्विरोधेनावच्छेदकभेदं विना तदुभयसम्बन्धाभावादवश्यं साध्यसम्बन्धितावच्छेदकमस्ति, तदेव च साधनावच्छिन्नसाध्यव्यापकं

---

करणान्तर्भावेन तेन साध्यविशिष्टसाधनतावच्छेदकावच्छिन्नसाधनवत्त्वव्यापकाधिकरणताकत्वं पर्य्यवस्यति, निरुक्तविशिष्टसाधनव्यापकत्वमिति तु निष्कर्षः। इत्थञ्च सत्ताद्येकव्यक्तिकहेतुनिष्ठद्रव्यत्वादिसामानाधिकरण्यव्यापक-सामानाधिकरण्यप्रतियोगिनि-घटत्वादौ

---

ण्येनेति, न तु शाखादिवद्वैयधिकरण्येनेति भावः। तत्त्वमवच्छेदकमित्यर्थः। ननु सम्बन्धितोपाध्योर्वैयधिकरण्यात् कथमवच्छेद्यावच्छेदकभाव इत्यत आह, तच्चेति। तथाच सम्बन्धितायदधिकरणान्तर्भावेन उपाधिस्तदधिकरणान्तर्भावेन तद्वयोरेव व्याप्तिः। इदमेव दर्शयति, तेनेत्यादिना। अथवा तथापि द्रव्यं सत्त्वादित्यत्र घटत्वादावतिव्याप्तिः, घटत्वसामानाधिकरण्येऽपि तादृशसामानाधिकरण्यव्यापकत्वादित्यत आह, तच्चेति। तथाच साध्यसम्बन्धिताधिकरणं यद्विशिष्टसाधनं तद्वत्त्वमवच्छेद्यमित्यर्थः। साधनवत्त्वव्यापकाधिकरणताकत्वमित्यधिकरणद्वयप्रवेशे गौरवादाह, निरुक्तेति। साधनतावच्छेदकावच्छिन्नसाध्यविशिष्टसाधनव्यापकमित्यर्थः। इत्यञ्चेति। अधिकरणान्तर्भावेन व्यापकत्वं इत्यर्थः। द्वितीयव्याख्यायामेतस्य स्वातन्त्र्येण निरासो बोध्यः।

साधनाव्यापकं तत्रोपाधिः, अतएव व्यभिचारे चावश्यमुपाधिरिति सङ्गच्छते, अन्यथा व्यभिचारादेव तत्रागमकत्वेन व्यभिचारित्वेन न तदनुमानमप्रयोजकत्वात् ॥ २० ॥

---

नातिप्रसङ्गः, न वा द्रव्यं जन्यत्वे सति सत्त्वादित्यादौ द्रव्यत्वविशिष्टसत्ताद्यव्यापके स्पर्शवत्त्वादावप्रसङ्गः, निःस्नेहं स्पर्शात्, द्रव्यं सत्त्वादित्यादौ शीतस्पर्शान्यत्वरूपान्यत्वादेर्वारणाय । तत्रेत्यादि । तत्र साध्यविशिष्टे

---

एकव्यक्तीति । विभिन्नव्यक्तिके न्यूनवृत्तिसामानाधिकरण्यस्याधिकवृत्तिसामानाधिकरण्याव्यापकत्वमिति स्फोरयितुम् साधनतावच्छेदकावच्छिन्नस्य फलमाह, न वेति । शीतस्पर्शान्यत्वेत्यादि-निःस्नेहं स्पर्शादित्यत्र शीतस्पर्शान्यत्वस्य साधनव्यापकतया सर्व्वसम्मतम् एवानुपाधित्वं,रूपान्यत्वस्य तु साधनाव्यापकत्वेऽपि द्रव्यत्वाभावविशिष्टसत्तावति स्पर्शादौ सत्त्वेन विरोधाभञ्जकतया (१) एतन्मत एवानुपाधित्वमिति । (२) सामानाधिकरण्येनेति सामानाधिकरण्यप्रत्यासत्त्याव्यावर्त्तकं साध्यविशिष्टसाधनभेदकं, तथाच शीतस्पर्शान्यत्वरूपान्यत्वयोर्भेदकत्वाभावान्नातिव्याप्तिरिति भावः, तेन घटव्यधिकरणस्य घटत्वस्य तद्व्यावर्त्तकस्यापि वैलक्षण्यं सूचितम् ।

---

(१) इं, विरोधात्तद्व्यञ्जकतया ।

(२) इं, सामानाधिकरण्येनेत्यादि नातिव्याप्तिरिति भाव इत्यन्तं नास्ति ।

साधने विशेषणं साध्याभावविशिष्टात्साधनात् सामानाधिकरण्येन व्यावर्त्तकं साध्याभावविशिष्टनिरुक्तसाधनवदवृत्तीति यावत्, एवञ्च द्रव्यं सत्त्वादित्यत्र सत्ताया अभेदेऽपि गुणकर्म्मान्यत्वेनाव्याप्तिः। नापि द्रव्यं कर्म्मान्यत्वे सति सत्त्वादित्यत्र गुणान्यत्वादौ, इत्यञ्च साधनतावच्छेदकस्यानवच्छेदकत्वद्योतनाय परं तद्भिन्नत्वमुक्तं, न तु विवक्षितमेव तत् वैयर्थ्यात्, इदं दधि जन्यं वा दध्न इत्यादौ दधित्वाद्यव्याप्तेश्च।

---

नन्वेकस्य हेतोः कथं साध्यतदभावविशिष्टस्वस्मात् स्वस्य व्यावर्त्तकत्वमित्यत आह, * साध्याभावविशिष्टेति। निरुक्तं साधनतावच्छेदकावच्छिन्नम्, इदमेव विशदयति, एवमिति। निरुक्तस्य व्यावृत्तिमाह, नापीति। इत्यञ्चेति। अतएव सामञ्जस्ये इत्यर्थः। अनुकूलत्वमुक्त्वा प्रतिकूलत्वमप्याह, इदमिति। साध्यञ्च नोपाधिरित्यत आह, जन्यं वेति। न चात्र विवक्षायां जातिमान् मेयत्वादित्यादौ जात्यभाववति मेयत्वाधिकरणे समवायसम्बन्धेन वृत्ते-

---

* विशेषणमिति तथाच साध्यविशिष्टसाधनं साध्याभावविशिष्टसाधनात् भिद्यते उपाधिसामानाधिकरण्यमित्यर्थः, तेन स्नेहाभावविशिष्टस्पर्शस्य साध्याभावरूपस्नेहविशिष्टस्पर्शभेदे साध्यशीतस्पर्शान्यत्वसामानाधिकरण्यादिति हेतु र्व्यभिचारी शीतस्पर्शे शीतस्पर्शान्यत्वसामानाधिकरण्यं तेन साध्याभावरूपस्नेह विशिष्टस्पर्शभेद इति न शीतस्पर्शान्यत्वमुपाधिरिति रूपान्यत्वमप्येवं, ननु तथापि द्रव्यं सत्वादित्यत्र गुणकर्म्मान्यत्वं नोपाधिः स्यात्. द्रव्यत्वविशिष्टसत्वे द्रव्यभेदविशिष्टसत्वभेदाभावादित्यत आह। साध्येति।

यद्वा, प्रकृतसाधनतावच्छेदकानवच्छेद्यप्रकृतसाधननिष्ठसाध्यसम्बन्धितावच्छेदकत्वं पूर्व्वदलार्थः, अनवच्छेदकत्वञ्च तस्य साध्याभावविशिष्टसाधनवृत्तितया तद्विशिष्टसाधनस्य साध्याभाववद्वृत्तित्वेन साध्याभाववतस्त-

रप्रसिद्धेः सत्त्वाद्युपाधावव्याप्तेः, सिद्धान्तलक्षणोक्तखण्डश्च प्रसिद्धावेव सुलभत्वादिति, साध्याभावविशिष्टसाधनाऽधिकरणत्वव्यापकीभूततत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगीति(१)तद्दलार्थइत्यपि केचित्। अत्र च तत्सम्बन्धः साध्यविशिष्टसाधनव्यापकताघटकसम्बन्धाः बोध्याः। साधनतावच्छेदकभिन्नेनेति (२) सार्थकीकर्त्तुमाह, यद्वेति। पूर्व्वकल्पे तत्र विशेषणमित्यस्य(३) साध्याभावविशिष्टसाधनवद्वृत्तितया व्याख्यातस्य बलादेव सद्धेतुत्वनिरासः। अत्र तु यथा व्याख्येयस्य सद्धेतावपि सत्त्वादाह, प्रकृतसाधनतावच्छेदकेत्यादि। तथाच सद्धेतौ साधनतावच्छेदकावच्छेद्या साध्यसम्बन्धितेति तन्निरासः। तस्य साधनतावच्छेदकस्य। ननु द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वादित्यादौ गुणकर्म्मान्यसत्तात्वस्य द्रव्यत्वाभावविशिष्टसत्तावृत्तितया विवक्षितस्य सत्त्वात्, गुणकर्म्मान्यसत्त्वादावतिव्याप्तिरित्यत आह, तद्विशिष्टेति। साधनतावच्छेदकविशिष्टेत्यर्थः (४), तथाच गुणकर्म्मान्यसत्तात्वविशिष्टस्य न साध्याभाववद्वृत्तित्वमिति भावः। ननु तथापि विशिष्टस्य अनतिरिक्त-

(१) ङ, तद्विदलार्थः। (२) ङ, भिन्नेति। (३) ङ, पूर्व्वकल्पविशेषणमित्यतः। (४) ङ, साधनतावच्छेदकविशिष्टेत्यर्थः एतत्पाठो नास्ति।

द्विशिष्टसाधनवत्त्वेनेति यावत्, एतेन धूमवान् मेयवत इत्यादौ मेयानवच्छेद्यसाध्यसम्बन्धाप्रसिद्धिः, गुणवद्-गुणकर्म्मान्यत्वे सति जातिमत्त्वादित्यादौ जातित्वघट-कनित्यत्वादेर्वैयर्थ्येन विशिष्टस्यानवच्छेदकतया गुण-कर्म्मान्यत्वादेरुपाधितापत्तिश्चेति निरस्तम्, अवच्छेद-कत्वञ्च सामानाधिकरण्येन, तथाच साध्यविशिष्टस्य साध्यसम्बन्धितानवच्छेदकसाधनतावच्छेदकावच्छिन्नसा-धनस्य व्यापकत्वमर्थः पर्य्यवस्यति, उपदर्शितशीत-

---

त्वात्तद्दोषतादवस्थ्यम् इत्यत आह, साध्याभाववत इति। अत्र यद्यपि विशिष्टस्यानतिरिक्तत्वेन साध्याभाववत्यपि गुणादौ सत्ता-वत्त्वेन तद्विशिष्टसत्तावत्त्वं, तथापि तथा प्रत्ययाभावान्न (१) तथा-त्वमिति। एतेन इष्टशावच्छेदकत्वस्याविवक्षणेन। ननु तथापि बहूनां मेयानाम् अवच्छेदकत्वमपेक्ष्य एकमेव लघु केवलान्वयि-मेयत्वमवच्छेदकं वक्तव्यं, तथाच तदनवच्छेद्या सम्बन्धिता मेयवति वर्त्तत एव। यद्वा स्वानवच्छेदकतत्कत्वं वाच्यं, तथाच यत्किञ्चिन्मेये स्वानवच्छेदकं सुलभमिति तस्यानुयोगितया तदंशे न सामान्या-भावप्रवेश इत्यत आह, गुणवदिति। अत्र च जातित्वस्य समवेत-त्वगर्भतया तन्मात्रस्यैव सम्यक्त्वमित्यभिप्रायः, द्रव्यं रूपत्वादित्यादौ न्यूनवृत्तिघटत्वादावतिव्याप्तिवारणायाह, तथाचेति। साधनताव

---

(१) इ, प्रत्ययाभावादेवा तथात्वम्।

स्पर्शान्यत्वादिवारणाय, तत्रेत्यादि । तत्र साधनताव-च्छेदकविशिष्टे साधने, विशेषणं साध्यशून्याद्व्यावृत्त्यौ-पयिकं, यत्सामानाधिकरण्यविशिष्टप्रकृतसाधनवत्त्वं साध्याभाववति न वर्त्तत इति यावत्, साध्याभाव-विशिष्टप्रकृतसाधनाधिकरणसामान्यात् साध्यविशिष्ट-प्रकृतसाधनाधिकरणसामान्यस्य व्यावर्त्तकमिति समु-दयार्थनिष्कर्ष इत्याहुः ।

---

च्छेदकभिन्नेनेति सार्थकीकर्त्तुं चरमदलं सद्धेतुसाधारणं व्याचष्टे । तत्रेति । व्यावृत्त्यौपयिकं साध्याभाववतः । यदिति, यत्पदमुपाधि-परम् । प्रकृतेति, साधनतावच्छेदकावच्छिन्नमित्यर्थः । तेन द्रव्यं कर्म्मान्यत्वे सति सत्त्वादित्यादौ गुणान्यत्वेनाव्याप्तिः निष्कृष्टं कल्पान्तरमाह, साध्याभावेत्यादि । पूर्व्वकल्पस्य निष्कर्षोऽयमि-त्यन्ये । प्रकृतेति, साधनतावच्छेदकावच्छिन्नेत्यर्थः ।

तेन द्रव्यं कर्म्मान्यत्वे सति सत्त्वादित्यादौ गुणान्यत्वस्य संग्रहः, द्रव्यं सत्त्वादित्यादौ गुणान्यत्वस्य द्रव्यत्वाभाववद्गुणव्यावर्त्तकत्वादाह, सामान्यादिति । तथाच कर्म्माव्यावर्त्तकत्वेन (१) न तत्रातिव्याप्ति-रिति । प्रकृतेति, साधनतावच्छेदकावच्छिन्नेत्यर्थः । तेन द्रव्यं जन्यत्वे सति सत्त्वादित्यादौ द्रव्यत्वविशिष्टसत्ताधिकरणसामान्या-

---

(१) ङ, कर्म्माव्यापकत्वेन ।

केचित्तु विशेषणं सामानाधिकरण्यं, तथाच सामानाधिकरण्यप्रत्यासत्त्या येनावच्छिद्यते अवच्छेदकीभूतसामानाधिकरण्यप्रतियोगीति यावत्, अवच्छेदकत्वञ्चेदमन्यूनानतिरिक्तवृत्तित्वं गुरोरप्युपाधिसामानाधिकरण्यस्याक्षतमेव। यद्यपि वायुः प्रत्यक्ष उद्भूतरूपवत्त्वादित्यत्र महान् अनित्यद्रव्यत्वादित्यत्र महत्त्वस्यानित्यद्रव्यसमवेतत्वस्य च वक्ष्यमाणलक्षणाक्रान्तस्योपाधेः

---

व्यावर्त्तकत्वेऽपि (१) स्पर्शवत्त्वेनाप्रसङ्गः। द्रव्यं सत्त्वादित्यत्र घटत्वादावतिव्याप्तिवारणाय सामान्येति।

सार्व्वभौममतमवलम्बमान आह, केचित्त्विति। उपाधेर्हेत्ववृत्तित्वेन विशेषणत्वं न घटते इत्यत आह, सामानाधिकरण्यमिति। ननु तथाप्युपाधेः सम्बन्धितासामानाधिकरण्यमेतदेवाह, (२) तथाचेति। सामानाधिकरण्यस्य प्रत्यासत्तित्वे मानाभावादाह, अवच्छेदकीभूतेति। नन्ववच्छेदकत्वं स्वरूपसम्बन्धविशेषः, तच्चार्द्रेन्धनप्रभववह्निमत्त्वस्यैव कल्प्यते, न त्वार्द्रेन्धनप्रभववह्निसमानाधिकरणस्येत्यतः पारिभाषिकं, तदाह, अवच्छेदकत्वञ्चेति। अतएवाह, गुरोरिति। उद्भूतेति। वक्ष्यमाणलक्षणाक्रान्त्यर्थं अन्यथा प्रत्यक्षत्वाभावविशिष्टरूपवतां चक्षुरादीनामव्यावर्त्तकत्वेन महत्त्वस्यानुपाधित्वं स्यादिति। अत्रो-

---

(१) ङ, न क्षतिः। (२) ङ, सम्बन्धितासामानाधिकरण्याभावादाह।

सामानाधिकरण्यं साध्यसामानाधिकरण्यन्यूनाति-रिक्तवृत्ति, तथापि हेतुनिष्ठसाध्यसामानाधिकरण्यस्य हेतुनिष्ठं यत्सामानाधिकरण्यमन्यूनानतिरिक्तवृत्ति-

---

पाधिसामानाधिकरण्यं साध्यसामानाधिकरण्यन्यूनवृत्त्यतिरिक्त-वृत्त्यपि, प्रत्यक्षत्वसामानाधिकरण्यस्य गुणत्वादौ वर्त्तमानत्वात्तत्र तदभावान्महत्त्वसामानाधिकरण्यस्य गगनत्वादौ विद्यमानत्वा-त्तत्रैतदभावाद्, हेतुनिष्ठेति। तथापीत्यादौ हेतुनिष्ठेत्यत्र हेतु-तावच्छेदकावच्छिन्नहेतुर्वक्तव्य इत्यभिप्रायादुदाहरणान्तरमाह, महानिति। अनित्यपदं वक्ष्यमाणलक्षणाक्रान्त्यर्थम्। तेन मह-त्त्वविशिष्टद्रव्यत्ववति गगनादावनित्यसमवेतत्वस्यावर्त्तमानत्वेऽपि न क्षतिः। अत्र हेतुनिष्ठसामानाधिकरण्यमित्युक्तेऽपि न निर्व्वाहः, अनित्यद्रव्यत्वस्य द्रव्यत्वाभिन्नतया गगनावच्छेदेनापि हेतौ महत्त्वसामानाधिकरण्यस्य विद्यमानत्वात्तदवच्छेदेन चोपा-धिसामानाधिकरण्याभावादिति, अत्रापि यथाश्रुते उपाधिसामाना-धिकरण्ये साध्यसमानाधिकरण्यन्यूनातिरिक्तवृत्त्येवाऽत्र महत्त्व-सामानाधिकरण्यस्य गगनत्वादौ विद्यमानत्वात्तत्रोपाधिसामाना-धिकरण्याभावादुपाधिसामानाधिकरण्यस्य रूपत्वादौ विद्य-मानत्वात् साध्यसमानाधिकरण्याभावात्, तथापीत्यादिहेतुद्वय एव हेतुतावच्छेदकावच्छिन्नत्वं बोध्यम्, आद्यहेतुतावच्छेदकाव-च्छिन्नत्वप्रयोजनन्तु उपदर्शितं, द्वितीयोदाहरणभागे द्वितीयस्य तु द्रव्यं कर्म्मान्यत्वे सति सत्त्वादित्यादौ कर्म्मावच्छेदेनापि

तत्त्वं विवक्षितं सत्त्वनिष्ठद्रव्यत्वसामानाधिकरण्यं च तन्निष्ठकर्म्मान्यत्वसामानाधिकरण्यमतिरिक्तवृत्ति, गुणे तदभावावच्छेदकावच्छिन्नवृत्तिकत्वात्, पृथिवीत्वादि-सामानाधिकरण्यन्तु न्यूनवृत्ति, जलादौ तदवच्छेद-कावच्छिन्नवृत्त्यभावप्रतियोगित्वात्, साध्यव्यापकानां सङ्केतावुपाधित्ववारणाय, साधनतावच्छेदकभिन्नेनेति तदनवच्छेद्यार्थकमित्याहुः ॥ २० ॥

---

हेतौ गुणान्यत्वस्य सामानाधिकरण्यसत्त्वेऽपि नाव्याप्तिरिति, अन्यूनानतिरिक्तमित्यत्रानतिरिक्तत्वस्य प्रयोजनमाह, सत्त्वनिष्ठेति। गुण इति। तदभावो द्रव्यत्वसामानाधिकरण्याभावः। अन्यून-वृत्तित्वस्य फलमाह, पृथिवीत्वेति। जलादाविति। तदवच्छे-दकं द्रव्यत्वसामानाधिकरण्यावच्छेदकम्। ननु साध्यसम्बन्धि-तायाः साधनतावच्छेदकभिन्नत्वमेवेति, तस्मिन् दत्तेऽपि न वारण-मित्यत आह, तदनवच्छेद्येति। (१) तथाच हेतुनिष्ठसाधनतावच्छे-दकानवच्छेद्यसाध्यसामानाधिकरण्यावच्छेदकत्वसमनियतं हेतु-निष्ठं यत्सामानाधिकरण्यावच्छेदकत्वतत्त्वमुपाधित्वमिति। नन्वी-दृशनियम एव कथं प्राभाकरमते निरटङ्कि, प्रत्यक्षो मूर्त्तत्वादित्यत्र मूर्त्तत्वं प्रत्यक्षत्वव्यभिचारिमूर्त्ते उद्भूतरूपव्यभिचारित्वात् इति व्यभिचारसाधकस्य मूर्त्तत्वादेरपरिग्रह इति ॥ २० ॥

---

(१) इं, तथाच इत्यादि उपाधित्वमित्यन्तपाठो नास्ति।

अतएव च तत्र साध्यसम्बन्धितावच्छेदकरूप-
लक्षणा व्याप्तिः, साधनताभिमते च कास्तीति स्फटिके
जवाकुसुमवदुपाधिरसावुच्यते, लक्षणन्तु साध्यसाधन-
सम्बन्धव्यापकत्वे सति साधनाव्यापकत्वं, विषम-

---

ननु सर्व्वत्र सोपाधौ सर्व्वेणोपाधिना साध्य-
सम्बन्धोऽवच्छिद्यत इति न नियमः, अयं प्रत्यक्षो मूर्त्त-
त्वादित्यादावुद्भूतरूपवत्त्वादेः तदसम्भवादित्यत आह,
अतएव च तत्रेति । यत एवोद्भूतरूपवत्त्वादेर्न तथात्व-
सम्भवः, अतएव तत्र तादृशनियमवादिमते इदं, लक्षण-
मिति, साधनाव्यापकत्वमिह साध्याभावविशिष्टसाधन-
व्यापकीभूताभावप्रतियोगित्वं, तादृशसाधनासामाना-
धिकरण्यमिह पर्य्यवसितं, तेनोपदर्शितोद्भूतरूपवत्त्व-
व्युदासः । अथ प्रत्यक्षो द्रव्यत्वादित्यादौ घटत्वादा-
वतिव्याप्तिः, साध्यव्यापकत्वेन विशेषणे च स श्यामो
मित्रातनयत्वादित्यादौ शाकपाकजत्वादावव्याप्तिरत

---

आभाष्यमानलक्षणकर्त्तुस्तदलक्षणत्वमेवेति व्यञ्जयन्नाह, न-
न्विति । नन्वेतल्लक्षण एव यथाश्रुते कथं तन्निरास इत्यत आह, साध-
नाव्यापकत्वमिहेति, व्यापकत्वपर्य्यन्तप्रवेशे गौरवादाह, तादृशेति ।
तेनेति । प्रत्यक्षत्वाभाववति मूर्त्ते परमाण्वादावपि उद्भूतरूपस्य वर्त्त-

व्याप्तस्तु नोपाधिपदवाच्यः प्रवृत्तिनिमित्ताभावात्, दूषकता च तस्य व्यभिचारोन्नायकतया। न च व्यभिचारोन्नायकत्वमेवोपाधित्वम्, अप्रयोजकसाध्यव्यापकव्यभिचारिणोऽप्युपाधित्वापत्तेरिति ॥ २१ ॥

इति तत्त्वचिन्तामणौ विशेषव्याप्तिः समाप्ता।

---

उक्तं, साधनसम्बन्धेत्यादि। साध्याभावसम्बन्धिनि विरुद्धस्य साध्यसम्बन्धस्यावच्छेदभेदं विनानुपपद्यमानस्यावच्छेदकीभूयोपपादनमुपाधिफलं तदसमर्थानाञ्चोपदर्शितोद्भूतरूपवत्त्वादीनां नोपाधिभावः सम्भवतीत्याह, व्यभिचारिणोरिति। व्यभिचारः सपक्षविपक्षवृत्तित्वम्।

अथ विपक्षगामित्वरूपव्यभिचारोन्नयनमेवोपाधिफलं

---

मानत्वेनेत्यर्थः। साध्यव्यापकत्वेनेति, साध्यतावच्छेदकावच्छिन्नसाध्यव्यापकत्वेनेत्यर्थः। नन्वीदृशविवक्षयैव कथमुद्भूतरूपादीनां वारणमित्यनुशयान उत्तरग्रन्थं योजयन्नाह, साध्याभावसम्बन्धिनीति। तथाचोपाधावपि ईदृशफलवादीनां गुरूणां तदलक्ष्यमेव तदुक्तव्याख्यानद्वयमदुष्टमिति भावः, विपक्षगामित्वरूपव्यभिचारे तस्य विरुद्धसाधारणतया तथोक्तविरोधापादनं न घटत, इत्यत आह; व्यभिचार इति। विपक्षसमित्वोन्नयनं तृतीयाऽत एवेत्यनेन

सम्बन्धनिवृत्तिसिद्धावर्थात्साध्यनिवृत्तिः । सिध्यतीति । प्रकारान्तरप्रदर्शनाय परं तथाविधोक्तिः । रूढ्या न्यूनवृत्तावुपाधित्वव्यवहारं निरस्य योगेनाधिकवृत्तौ तन्निरस्यति, विपक्षेति । प्रवृत्तिनिमित्तं यौगिकं व्यभिचारोन्नायकत्वमेवेत्येवकारेण योगार्थानादरं सूचयति । उपाधित्वम् उपाधिपदप्रवृत्तिनिमित्तम्, उपाधिता उपाधिपदवाच्यता, योगादरे तु लाघवात्साध्यव्यापकतामात्रे रूढिरिति भावः ॥ २१ ॥

इत्यनुमानदीधितौ विशेषव्याप्तिः समाप्ता ।

---

क्तं, तत्कथमिदं लक्षणमित्यत आह, लक्षणमिति । प्रकारान्तरेति । तथाचेत्थं व्यभिचारमनुमापयितुरेव तथा लक्षणमिति, तं उपाधिव्यवहारं, ननु प्रवृत्तिनिमित्तत्वं यदि शक्यतावच्छेदकत्वं तच्चरूढिविषयतावच्छेदकत्वस्यैवेति अत आह, प्रवृत्तिनिमित्तमिति । सूचयतीति । तथाच तदनन्तरमेव तदुत्थानं घटत इति । ननु पदप्रवृत्तिनिमित्तव्यवस्थापने उपाधित्वव्यवस्थापनमसङ्गतमित्यत आह, उपाधित्वमिति । एवमग्रेऽपि । ननु अयोगादेरपि व्यभिचारोन्नापकत्वमेव कथं परित्यक्तमित्यत आह, लाघवादिति ।

## अथ व्याप्तिग्रहोपायः ।

### तत्त्वचिन्तामणिः ।

सेयं व्याप्तिर्न भूयोदर्शनगम्या दर्शनानां प्रत्येकमहेतुत्वात् आशुविनाशिनां क्रमिकाणां मेलकाभावात्,

---

अथ व्याप्तिग्रहोपायः दीधिति ।

व्याप्तिस्वरूपं निरूप्य परमतनिराकरणपूर्व्वकं स्वमतेन तद्ग्रहोपायमभिधातुं प्रथमं प्राभाकरमतमुपदर्शयति, सेयमित्यादिना । दर्शनानां प्रत्येकं वा हेतुत्वं मिलितानां वा, मिलनमपि स्वरूपतो व्यापारतो वा आद्ये दर्शनानामिति, द्वितीये आशुविति क्रमिकाणा-

---

मात्रपदेन तस्यैव व्यावृत्तिः, अप्रयोजकेत्यादिमूले तु तादात्म्येन सङ्गमनीयमिति हृदयम् ॥ २१ ॥

इति महामहोपाध्यायकृष्णदाससार्व्वभौमसङ्कलितायामनुमानदीधितिप्रसारिण्यां विशेषव्याप्तिः समाप्ता ।

---

अथ व्याप्तिग्रहोपायः प्रसारिणी ।

मूलीयप्राथमिकं प्राभाकरमतं सङ्गमयन् तदीयं सेयमिति च व्याचक्षाण आह, व्याप्तीति । परमतनिराकरणपूर्व्वकमित्यभिधानक्रियाविशेषणं, तथाच तत्र (१) गतीति भावः ।

स्वरूपत इति । कार्य्याव्यवहितप्राक्काले स्वरूपेण सत्त्वमित्यर्थः ।

---

(१) इं, तत्र गतीति भावः ।

न च तावद्दर्शनजन्यसंस्कारा इन्द्रियसहकृता व्याप्तिधीहेतवः प्रत्यभिज्ञायामिन्द्रियस्य तथात्वकल्पनादिति वाच्यं, समानविषये स्मरणे प्रत्यभिज्ञाने च संस्कारो हेतुरतः कथं संस्कारेण व्याप्तिज्ञानं जन्येत, अन्यथातिप्रसङ्गः ॥ १ ॥

---

मपि स्थिराणामस्थिराणामपि सहोत्पन्नानां मिलनमस्तीत्युभयमुपात्तम्। तृतीयमाशङ्क्य निराकुरुते, न चेति। व्यापकसाध्यसामानाधिकरण्यात्मिकायां व्याप्तौ साध्यसामानाधिकरण्यांशस्य प्रथममेव गृहीतत्वादगृहीतव्यापकत्वांशग्रहे सहचारदर्शनजन्यसंस्काराणां हेतुत्वं वाच्यम्। तच्च न सम्भवति भिन्नविषयकत्वादित्याह, समानेति। भ्रमस्त्वगृहीतभेदं ज्ञानद्वयं, न तु वैशिष्ट्यावगाहीति भावः ॥ १ ॥

---

व्यापारत इति। तदानीमेव व्यापारसत्त्वमित्यर्थः। दर्शनानामितीति। तथाच मूले प्रत्येकं व्यभिचारादेवाहेतुत्वमिति। तृतीयं व्यापारतो मिलनम्। सामानाधिकरण्यांशमादाय मूलस्थं समानविषयकेत्यादि सम्भवत्येवेत्यतो व्याचष्टे। व्यापकेति। ननु समानविषयत्वेन संस्कारजनकत्वावधारणे रजतत्वगोचरेण संस्कारेण कथं सम्बन्धावगाहनमित्यत आह, भ्रमस्त्विति। यद्यपि रजतत्वगोचरः संस्कारः प्रायशस्तत्सम्बन्धगोचरः सम्भवत्येव, तथापि

किञ्च सम्बन्ध भूयो दर्शनं भूयःसु स्थानेषु दर्शनं, भूयसां वा दर्शनं भूयांसि वा दर्शनानि न तथा, एकत्र रूपरसयोर्द्रव्यत्वघटत्वयोश्च व्याप्तिग्रहात् एकत्रैव धारावाहिके तद्धीप्रसङ्गात्, भूयस्त्वस्य त्रिचतुरादित्वेनाननुगमाच्च। अपि च पार्थिवत्वलौहलेख्यत्वादौ शतशो दर्शनेऽपि व्याप्त्यग्रहात्, तर्कसहकृतं तथेति चेत्तर्हि सहचारदर्शनव्यभिचारादर्शनसहकृतः स एव व्याप्तिग्राहकोऽस्तु आवश्यकत्वात्, किं भूयो

---

न तथा न व्याप्तिग्राहकं व्यभिचारदर्शनं व्यापारतया सहकारीति व्यभिचारादर्शनसहचार-

---

यत्र रजतत्वमात्रगोचरः संस्कारस्तन्मात्रांशे हेतुत्वात् उद्बोधकसमवधानं वा तत्रापि भ्रमो भवत्येवेत्यभिप्रायः। न च तथापि शुक्तिसन्निकर्षस्यैव तत्सम्बन्धभासकत्वमिति वाच्यम्। प्रकारत्वान्यथानुपपत्त्यैव प्रकारभानसामग्र्या एव सम्बन्धभासकत्वाभ्युपगमात्, संवादिप्रत्यभिज्ञायां च सम्बन्धसन्निकर्ष एव सम्बन्धभासक इति हृदयम्॥ १॥

अग्रे तथेत्यस्यान्यथापि सत्त्वात् नकारसमवहितमेव पाठं गृह्णन् व्याचष्टे, न तथेति। सहचारदर्शनव्यभिचारादर्शनसहकृता इति मूलं तत्र व्यभिचारादर्शनस्यात्र हेतुत्वे तर्कोऽन्यथा सिद्ध इत्यत आह, व्यापारतयेति। तथाच व्यापारिणो नान्यथा

दर्शनेन न च तेन विना तर्क एव नावतरति, प्रथमदर्शनव्युत्पन्नस्य तर्कसम्भवात्, नचैवमेवास्तु तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थानात्, जातमात्रस्य प्रवृत्तिनिवृत्तिहेत्वनुमितिजनकव्याप्तिज्ञानं तर्कं विनैवातो नानवस्थेति चेत्तर्हि व्यभिचारात्, सोऽपि न व्याप्ति-

---

दर्शनसहकृतस्तर्क एव व्याप्तिग्राहकः भूयो दर्शनन्तु क्वचित्तर्कप्रवृत्तावुपयुज्यत इति निर्गलितम्। नैयायिकमतमाशङ्क्य निराचष्टे, न चैवमिति। जातमात्रस्येति। तथाच तन्मूलको व्याप्त्यन्तरग्राहकतर्कावतार इति भावः। तर्हीति। न च व्याप्तिप्रत्यक्षं प्रति तर्को हेतुस्तत्तु स्मरणमिति न व्यभिचारावकाशः, विनानुभवं स्मरणस्यायोगात्। न च जन्मान्तरीणः सः जन्मान्तरेऽपि पर्यनुयोगतादवस्थ्यात्, अना-

---

सिद्धिरिति भावः। (१) प्रथमदर्शनेऽपीत्यादिफक्किकार्थस्याव्यवहितप्रक्रान्तस्यानुकर्षणभ्रममवतारिकाव्याजेन निराकरोति, व्यभिचारादर्शनेत्यादि। वह्निधूमव्याप्तिग्रहे किमायातं तत्राह, तन्मूलेति। व्याप्त्यन्तरेति। यद्यपि स्तनपानेष्टसाधनताघटितव्याप्तेर्धूमादिव्याप्तिग्राहकत्वे मानाभावस्तथापि गृहीतायां तस्यां प्रतिबन्धिविधया

---

(१) इ, प्रथमदर्शने इत्यादि तन्मूलेति पाठः नास्तीति।

ग्रहे हेतुः, न चैतद्बुद्धाववान्तरजातिरस्ति सामान्यप्रत्यासत्त्या सर्व्वोपसंहारादविनाभावग्रहः, सामान्यरूपता च सकृद्दर्शनगम्येति भूयो दर्शनापेक्षेति चेन्न, सामान्यस्य हि प्रत्यासत्तित्वं लाघवात्। न तु सामान्यतया ज्ञातस्य तदनभ्युपगमाच्च ॥ २ ॥

न च काकतालीयत्वादिशङ्काव्युदासार्थं द्वितीयादिदर्शनापेक्षेति वाच्यम्। द्वितीयादिदर्शनेऽपि सङ्घातादवस्थ्यात्। नन्वनौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुः, तद्देशकालतत्त्वावस्थितघटादीनामुपाधि-

---

दित्वेन च परिहारः परतो विचारयिष्यते। न चेति। मानाभावात् तर्कस्य च हेतुत्वासिद्धेः, यदि चागृहीतस्यागृहीतपुरोवर्त्तिसंसर्गस्य वा प्रत्यासत्तित्वेऽतिप्रसङ्गस्तदा पुरोवर्त्तिनि तद्ग्रहो मृग्यतां न तु सामान्यत्वेनेत्याह, न त्विति ॥ २ ॥

---

कारणं विना कार्य्योत्पत्तिशङ्काविघटनमिति हृदयम्। परत इति। अनादिसिद्धकार्य्यकारणाभावादिमूला इत्यत्रानादित्वेनानवस्थापरीहारः। (१) ननु सिद्धे तर्कस्य हेतुत्वे स्वर्गादाविव फलवैजात्यं कल्प्यतां तत्राह, मानाभावादिति। ननु तत्र तर्कस्य हेतुतैव मानं तत्राह, तर्कस्य चेति। दोषकालीनमुक्तिसन्निकर्षे

---

(१) इ॰, नन्वित्यादि तर्कस्य आप्तपाठो नास्ति।

त्वशङ्कानिरासः कस्यचित् साधनव्यापकत्वज्ञानेन कस्यचित् साध्याव्यापकत्वज्ञानेन स्यात्, तच्च भूयो-दर्शनं विना नावतरतीति चेन्न, अयोग्योपाधिव्यति-रेकस्यानुमानाधीतज्ञानत्वेनानवस्थापातात्।

अथ साध्यसाधनसहचरितधर्म्मान्तराणामुपाधित्व-संशये न व्याप्तिग्रहः, अतस्तेषामनुपाधित्वज्ञानं भूयो दर्शनाधीनसाध्याव्यापकत्वज्ञाने सतीत्येतदर्थं भूयो दर्शनापेक्षा अतएव यावता दर्शनेन तन्निश्चयस्तावद्भूयो दर्शनं हेतुरिति न वारसंख्यानियमो न वाऽननुगमः, यद्यपि चान्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वसंशयो नान्यव्याप्तिग्रहप्रतिवन्धकस्तथापि तदाहितव्यभिचार-संशयः प्रतिबन्धक इति तद्विधूननमावश्यकमिति चेन्न, अयोग्योपाधिसंशयाधीनव्यभिचारसंशयस्य तथाप्यनु-च्छेदात्, स च न भूयोदर्शनान्नाप्यनुमानादित्युक्तम्।

---

साध्यव्यापकत्वं साध्यसमानाधिकरणाभावप्रति-योगित्वं तद्ग्रहश्च साध्याधिकरणैकव्यक्तिवृत्तितया गृह्यमाणस्य तादृशव्यक्त्यन्तरग्रहं विना न सम्भवति,

---

सति शुक्तित्वं प्रमेयमिति स्मरणस्यापि न सामान्यजनाज्ञानमित्यत आह, अगृहीतपुरोवर्त्तीति ॥ २ ॥

अपि च भूयोदर्शनाहितसंस्कारो न वह्निरिन्द्रियसह-कारी तद्व्यापारं विनापि च सहचारादिज्ञानवतो व्याप्तिग्रहात्, नापि मनस इन्द्रियादिवद्भूयोदर्शनजन्य-संस्कारस्य तज्जन्यस्मरणस्य वा प्रमाणान्तरत्वापत्तेः, तस्मात् परिशेषेण सकृद्दर्शनगम्या सा, तथा ह्युपाध्य-भावो व्याप्तिः, अभावश्च केवलाधिकरणं तत्काल-सम्बन्धो वा स्वप्रकाशरूपं तज्ज्ञानं वा, तच्च प्रथमदर्श-नेनावगतमेव चक्षुरादिना न चाधिकस्तदभावोऽस्ति, न च प्रतियोगिज्ञानमधिकरणादिज्ञानजनकं ये नोपाधि-

---

इति भूयोदर्शनापेक्षा तदाहितः, संस्कारो वह्निरि-न्द्रियमात्रस्य सहकारी मनसोऽपि वा आद्ये, तद्व्यापारं विनेति । द्वितीये नापीति परिशेषात्साध्य-साधनसम्बन्धग्राहकातिरिक्तानपेक्षग्रहकत्वात् उपाध्य-भावग्राहकस्यापेक्षणीयत्वादसिद्धिं निरस्यति, तथा-

---

न सम्भवतीति अस्मिन्नधिकरणे तस्य विद्यमानत्वादेव साध्याधिकरणान्तरग्रहाभावे तद्वृत्त्यभावप्रतियोगित्वं दुर्ग्रहमिति । तद्व्यापारं विनेति । मूलं सङ्गमयिष्यता वह्निरिन्द्रियेत्यत्र मात्र पदं प्रक्षिप्तमिति ध्येयम् । साध्यसाधनेत्यादि । इयं व्याप्तिः प्राथ-मिकसाध्यसाधनसम्बन्धग्रहविषयः, साध्यसाधनसम्बन्धग्राहकाति-

ज्ञानं विना तन्न स्यात्, एवमुपाध्यभावे ज्ञाते किञ्चिन्न ज्ञातुमवशिष्यते, उपाध्यभावव्यवहारस्तु तद्दियमपेक्षते दीर्घत्वादिव्यवहार इवावधिज्ञानम्। न चैवं रासभ-सम्बन्धतुल्यवह्निधूमसम्बन्धज्ञानादेवानुमितिः स्यादिति वाच्यम्, उपाधिस्मरणे सत्युपाधितद्व्याप्येतरसकल-तदुपलम्भकसमवधाने चोपाध्यनुपलम्भसहितस्य केव-लाधिकरणज्ञानस्यानुमितिहेतुत्वात्, तद् व्यवहारहेतु-

---

हीति। उपाधिस्मरण इत्यादि। नन्वेवमसन्निकृष्टादि-हेतुकानुमितिर्न स्यात्, उपाधियोग्यानुपलम्भविरहा-दत आह, तद्व्यवहारेति। तथाच तद्व्यवहारस्य हेतु-रेवानुमिति हेतुः तच्चोपाध्यभावत्वेन ज्ञानम्, उपाधि-

---

रिक्तानपेक्षग्रहविषयत्वात् तन्नान्तरीयकपदार्थवदिति परिशेषो बोध्यः। यथाश्रुते तु सकृद्दर्शनग्राह्यमतेऽपि भूयोदर्शनग्राह्यत्व-सम्भवात्तदभावरूपपरिशेषविशेषणं न घटत इति। उपाध्यभाव-ग्राहकस्य तादृशसम्बन्धग्राहकातिरिक्तस्येत्यादि। असिद्धिः हेतु-विशेषणासिद्धिः। इत्यादीति। तथाच तद्ग्राहिका सामग्री अनुमितावेव हेतुर्न तु व्याप्तिग्रहे इति न हेतुविशेषणासिद्धिः, एवं योग्यानुपलब्धेरनुमितिप्रयोजकत्वे असन्निकृष्टादीत्यादिपदे-नातीन्द्रियादिपरिग्रहः। ननु तद्व्यवहार इत्युक्तावपि तद्दोषस्तद-वस्थ इत्यत आह, तथाचेति। तच्चेति। व्यवहारकारणमित्यर्थः,

त्वाच्च। नन्वेवं प्रथमदर्शनेन व्याप्तिनिश्चयाद्विशेषदर्शने-सति रासभादिसंशयवत् तत्संशयो न स्यादिति चेत् व्याप्तिज्ञानानन्तरं किं विद्यमान एवोपाधिर्म्मयोपाधि-त्वेन न ज्ञात इति शङ्कया गृहीतव्याप्तावपि संशयः, अतस्तत्र भूयोदर्शनेनोपाधिनिरासद्वारा व्याप्त्यभाव-शङ्कापनीयते ॥ ३ ॥

---

स्मरण इत्यादि तु तत्कारणप्रदर्शनपरम्, अभावत्वञ्चेद-मिह नास्तीति प्रतीति साक्षिकः स्वरूपसम्बन्धविशेषो-ऽतिरिक्तः पदार्थो वेत्यन्यदेतत् । एवञ्चोपाध्यभावत्वेन ज्ञानेऽधिकापेक्षां न वारयाम इति भावः । व्याप्ति-स्वरूपे संशयाभाव आपद्यते निरुपाधिसम्बन्धरूपव्याप्ति-त्वेन वा, आद्ये इष्टापत्तिः । द्वितीयमपि किमुपाधि-स्मरणादिकं विना तत्समवधाने सति वा सम्बन्धग्रहे

---

तदित्यस्य क्वाचित् केत्यादिः । ननु अभावत्वस्याधिकरणानतिरिक्त-त्वात् तदपि स्वरूपज्ञानान्नातिरिच्यत इत्यत आह, अभावत्वञ्चेति । अन्यदिति । प्रकारताया वैलक्षण्ये तु विवादाभाव इति भावः ।

ननु उपाध्यभावत्वप्रकारकज्ञाने भूयो दर्शनमपेक्षितमिति तवापि सम्मतं, तथाचानुमितिजनकज्ञाने भूयोदर्शनमपेक्षितमिति पर्य्यवसितं विवादेनेत्यत आह, एवञ्चेति। न वारयाम इति।

यद्वा ज्ञानप्रामाण्य संशयाद्व्याप्तिसंशयः, यथा घटज्ञानसामग्र्यां सत्यां घटज्ञाने सति तत्प्रामाण्य-संशयाहितस्तत्संशयो न त्वग्रिमसंशयानुरोधेन तत्र घटज्ञानमेव न वृत्तमिति कल्प्यते, तथेहाप्युपाध्यभावस्य व्याप्तित्वात् तस्य च केवलाधिकरणरूपस्य प्रथम-दर्शनेऽपि निश्चितत्वात्, व्याप्तिग्राहकान्तरस्याभावाच्च, परिशेषेण सकृद्दर्शनस्य व्याप्तिग्राहकत्वात्, तन्निश्चये प्रामाण्यसंशयादेवतत्संशयः। न चैवं रासभेऽपि प्रथमं व्याप्तिपरिच्छेदः स्यादिति वाच्यम्। तत्र व्याप्तेरभावात्

---

आद्ये किं विद्यमान इति। तथाच तद्ग्रहमात्रं न तु तदभावत्वेनापि ग्रह इति समानप्रकारकनिश्चयाभावा-त्तत्संशयो नानुपपन्न इति भावः॥ ३॥

द्वितीये, ज्ञानप्रामाण्येति। प्रथमेति। सत्यु-

---

तथाच व्याप्तिस्वरूपज्ञाने न सम्बन्धग्राहकातिरिक्तापेक्षेति। ननु नैयायिकमतेऽपि व्याप्तेः सामानाधिकरण्यात्मकतया स्वरूपग्रहे नातिरिक्तापेक्षेति, तथैव विवादाभाव इति चेन्नैवं, तन्मते व्याप्ति-स्वरूपस्य व्यभिचाराभावघटिततयाऽस्य चातिरिक्ततया तत्प्रत्यक्षेऽति-रिक्तापेक्षणात् इति भावः॥ ३॥

तद्ग्रहमात्रमुपाध्यग्रहमात्रम्। ननु प्रथमदर्शने निश्चयेऽपि

प्रत्यक्षज्ञाने विषयस्य हेतुत्वात् क्वचिदसंसर्गाग्रहात् तथा व्यवहारो दोषमाहात्म्यात्, न चात्रापि तथा आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इत्यभ्युपगमात्। केचित्तु साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यसामानाधिकरण्यं साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वं वा व्याप्तिस्तदुभयमपि योग्यं प्रत्यक्षेण वह्निधूमसम्बन्धानुभवेन प्रथममवगतमेव। महानसे योऽत्यन्ताभावोऽन्योन्याभावो-

---

पाधिस्मरणादावित्यादिः। न चात्रापीति। सर्व्वत्र रासभादावित्यर्थः। अवगत इति। स्वरूपकथनमात्रं, महानस इति। अस्मिन्नित्यादिः। महति वायौ योग्या-

---

उपाध्यभावत्वेन न निश्चयः तत्रोपाधिस्मरणादीनामपेक्षितत्वादित्यतः पूरयति सत्युपाधीति। अत्रापीति इति इदं शब्देन व्याप्तिभ्रमाविषयरासभो यद्यपि गृहीतस्तथापि न्यूनताभङ्गाय सर्व्वशब्देन व्याचष्टे, सर्व्वत्रेति। यत्र तु भ्रमस्तत्र सुतराम् अन्यत्रापि भ्रमे सर्व्वभ्रमे च समुचितमिति भावः। महानस इत्यनन्तरम् अवगत इति, यद्यपि मूलं तथापि अवगतत्वस्य ज्ञानेऽप्रयोजकत्वेनाविवक्षणे महानससामान्यमादायाभावो गृहीतुमशक्य इति महानसपदमवश्यं सङ्कोचनीयमिति व्युत्क्रमेण व्याख्या-

वावगतस्तस्य प्रतियोगी न वह्निर्न वा वह्निमानित्यनुभवात् रासभे तथावगमेऽप्यग्रे स बाध्यत इति, तन्न एवं हि तद्वह्नितद्धूमयोरेवाव्याप्तिः स्यात् न तु धूमत्ववह्नित्वावच्छेदेन न च तदनुमानोपयोगिवह्नित्वं वह्निमत्त्वं वा न प्रतियोगितावच्छेदकमिति प्रथमतो ह्यनु-

---

योग्योद्भूतरूपसामान्यतद्वतोरिव योग्ये वह्नौ तादृशप्रतियोगित्वसामान्यतद्वतोरप्यत्यन्ताभावान्योन्याभावयोर्योग्यत्वादिति भावः, न प्रतियोगितावच्छेदकमिति न धूमसामान्यसमानाधिकरणतादृशाभावप्रतियोगितासामान्यावच्छेदकमित्यर्थः। अथ साधनाव्यापकव्याप्यत्वाभावः साध्येऽधिकरणस्वरूप एव एवं साधननिष्ठसाध्यसम्बन्धे साधनतावच्छेदकातिरिक्तावच्छेद्यत्वाभावोऽपीत्यनुशयानो येन रूपेण ज्ञाता, व्याप्तिरनुमित्यङ्गं तद्रूपविशिष्टा न सकृद्दर्शनगम्या, सामानाधि-

---

तम्। इत्यादिरिति। तथाचैतन्महानसवृत्त्यन्याभावाप्रतियोगित्वं महानसान्तरासन्निकर्षेऽपि सुग्रहमित्यतो योग्यत्वमेवोपपादयति, महतीति। न प्रतियोगितावच्छेदकमितीति। सामान्याभावस्फुटीकरणाय नकारसम्बलितपाठो धृतः व्याप्तेर्हेतुनिष्ठत्वं कुर्व्वाणो मीमांसकमभिप्रेत्य अनौपाधिकत्वं निर्वक्ति, एवमिति।

मशक्यमेवेति मैवं प्रकृतसाध्यव्यापकसाधनाव्यापको वा साधनत्वाभिमतेन समं प्रकृतसाध्यसम्बन्धितावच्छेदकं विशेषणं वोपाधिः उभयथापि तदभावो न व्याप्तिः सिद्ध्यसिद्धिभ्यां तन्निषेधानुपपत्तेः किन्तु यावत्स्वव्यभिचारिसाध्यसामानाधिकरण्यमनौपाधिकत्वं तस्य च प्रथमं ज्ञातुमशक्यत्वात् । किञ्च न वस्तुगत्या व्याप्तेर्ज्ञानं हेतुः किन्तु व्याप्तित्वेन तच्च उपाध्यभावत्वं न च उपाधेरज्ञाने तदभावत्वेन ज्ञानं सम्भवति विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्य न च नियमतः प्रथम-

---

करण्यमात्रस्य च तथा भावं न वारयाम इत्याशयेनाह, किञ्चेति । विशेषणज्ञानसाध्यत्वात् तत्सामग्रीसाध्यत्वाद्वा, न चेति उपलक्षणमेतत् उपाधेरयोग्यस्यापि सम्भवात्, उपाधिसामान्यतद्वतो मूर्त्तत्वादिसामान्यतद्वतोरिवात्यन्ताभावान्योन्याभावयोरयोग्यतया प्रत्यक्षेण ग्रहीतुमशक्यत्वात् । न च योग्योपाधिव्यतिरेकग्रह एवानुमानाङ्गम् अयोग्योपाधिग्रहेऽप्यनुमिति

---

न वारयाम इति । पूर्व्वं न वारयाम इत्यत्र व्याख्याततत्त्वमेतत् मीमांसकमते विशेषणज्ञानस्याजनकत्वादाह, तत्सामग्रीति । ननूपाध्यभावत्वप्रकारकज्ञानस्यैवानुमितिहेतुत्वकथनात् मूलासङ्गति-

मुपाधिधीरस्ति। यच्चोक्तं प्रतियोगिज्ञानं व्यवहारहेतुः नाभावज्ञान इत्यस्तु तावदेवं तथापि तदभावो मा व्यवहारि उपाध्यभावज्ञानाधीनानुमितिः स्यादेव उपाधिज्ञानं विनापि न चैवम्। वस्तुतस्तु विशेषादर्शने सहचारादिसाधारणधर्म्मदर्शनाद्यभिचारसंशयात् प्रथमदर्शनेन न व्याप्तिनिश्चयः ॥ ४ ॥

---

प्रसङ्गात्। यथाश्रुतं दूषयति यच्चोक्तमित्यादिना व्यभिचारेत्यादि। अत्र प्रत्यक्षे ग्राह्य संशयस्यापि प्रतिबन्धकत्वमाहत्य व्यभिचारशङ्कायास्तथात्वाभिधानम्। अन्यथा पुनरसाधारणतत्तत्कारणमेलकरूपा सामग्री प्रतिबन्धिका बोध्या, विवेचितञ्चेदं प्रत्यक्षमणिदीधितौ, वक्ष्यते चाधिकमुपरिष्टात् ॥ ४ ॥

---

रित्यत आह, यथाश्रुतमिति। ननु ग्राह्यसंशयस्याप्रतिबन्धकत्वात् व्यभिचारज्ञानाभावेत्यादिमूलं कथं सङ्गतमित्यत आह, अत्रेति। अन्यथा ग्राह्यसंशयस्याप्रतिबन्धकत्वे असाधारणेति, कालादिव्युदासाय असाधारणकारणमपि प्रत्येकमतिप्रसक्तमित्यतो मिलनपर्य्यन्तं, ननु निश्चयत्वस्य कार्य्यतानवच्छेदकत्वाद्द्वयमपि न सम्यगिति मनसि कृत्वाह, विवेचितमिति ॥ ४ ॥

अथ व्यभिचारसंशयो नाव्यभिचारनिश्चयप्रतिबन्धकः ग्राह्यसंशयस्य निश्चयाप्रतिबन्धकत्वात् अन्यथा संशयोत्तरं क्वापि निश्चयो न स्यादिति चेन्न व्यभिचारसंशयः प्रतिबन्धक इति ब्रूमः किन्तु विशेषादर्शने सति सह-

---

अत्र च यद्यपि साधनगोचरसाध्याभाववद्वृत्तित्व-ग्रहाभावो हेतुरिति न युक्तं केवलान्वयिनि ग्राह्या-प्रसिद्ध्या ग्रहाप्रसिद्धेः, खण्डशः प्रसिद्ध्या क्वचित्ता-दृशभ्रमसम्भवेऽपि सर्व्वत्र तथा भ्रमे मानाभावात्। अतएव साध्यतावच्छेदकगोचरसाधनवन्निष्ठाभावप्रति-योगितावच्छेदकत्वग्रहोऽपि प्रत्युक्तः सकलसाध्यताव-च्छेदके तादृशग्रहे मानाभावात्, तथापि साध्यताव-च्छेदके तत्पुरुषीयतादृशावच्छेदकत्वग्रहस्य विषयतया-भावः, तद्विषयत्वाभावो वा तत्पुरुषीयव्याप्तिग्रहे हेतुः

---

ग्राह्येति। साध्याभावघटितस्याप्रसिद्धिरित्यर्थः। खण्डश इति अभावादौ साध्यीयत्वादिनेत्यर्थः। अतएव सर्व्वत्र तथा प्रसिद्धैव। ननु सर्व्वत्रैव तथा भ्रमो भविष्यतीत्यत आह, सकलेति। साध्यतावच्छेदक इत्यभावेनान्वितं विषयताया अभावप्रतियोगितावच्छेदकसम्ब-न्धत्वे मानाभावादाह, तद्विषयत्वाभावो वेति। व्याप्तिग्रहकाल एव पुरुषान्तरस्य तादृशविषयत्वसत्त्वादाह, तत्पुरुषीयेति। विषयताया

चारादिसाधारणधर्म्मदर्शनात् संशयः स्यात् न तु संशयसामग्रीतो निश्चय इति। किञ्च यद्धीसामग्रीयत्र प्रतिबन्धिका, विशेषादर्शने तत्र तद्धीरपीति व्यभिचारसंशयोऽपि प्रतिबन्धकः एवं भूयोदर्शनमपि संशायकं.तर्कस्त्वनवस्थाग्रस्त एवेति कथं व्याप्तिग्रहः।

---

वस्तुतो व्याप्तिः साध्यसाधनभेदभिन्नतया विशिष्यैव कार्य्यकारणभावः,तथाच यत्र साधनं साध्याभाववद्वृत्तिसाध्यतावच्छेदकं साधनवन्निष्ठाभावप्रतियोगितावच्छेदकमेकविधमनेकविधं वा व्यभिचारज्ञानं प्रसिद्धं तत्र यथायथं तदभावः पुरुषनिष्ठोव्याप्तिग्रहहेतुः अतएवैकविधव्यभिचारज्ञानविरहेऽन्यविधव्यभिचारग्रहाद्व्याप्तिधीविरोधः। एवञ्च क्वचिद्व्यभिचाराज्ञानस्याहेतुत्वेऽपि

---

ज्ञानानतिरेकेण कालिककादाचित्कत्वमभिप्रेत्यैतदुक्तम्। (१) ननु चैत्रीयज्ञानविषयत्वाभावसत्त्वे मैत्रीयो व्याप्तिग्रहः स्यादित्यत आह, तत्पुरुषीयव्याप्तीति। ननु प्रसिद्धाया इत्यादिवक्ष्यमाणयुक्तेस्तद्विषयत्वं तत्राप्यावश्यकमिति कथं सार्व्वत्रिकत्वमित्यनुशयानस्तत्पुरुषीयत्वप्रवेशेन कार्य्यकारणभावबाहुल्ये गौरवादाह वस्तुत इति। पुरुष निष्ठ इति। तथाच सामानाधिकरण्यप्रत्यासत्त्यैव

---

(१) इं, नन्वित्यादि व्याप्तीत्यन्तः पाठो नास्ति।

अत्रोच्यते व्यभिचारज्ञानविरहसहकृतं सहचार-दर्शनं व्याप्तिग्राहकं ज्ञानं निश्चयः शङ्का च सा च

---

न क्षतिः। प्रसिद्धायाः साधनवन्निष्ठाभावप्रतियोगि-तावच्छेदकत्वादिबुद्धेः, समानविषयतया तदभावबोध-विरोधित्वानुरोधेन तु तथात्वकल्पनं न वयं वारयामः यदि तत्तत्प्रकारादिनिवेशेन विशेषे न पर्य्यवस्येदिति दिक्। व्याप्तिश्च धूमादिव्यापकवह्निसमानाधिकरण-वृत्तिधूमत्वादिकं तादृशसामानाधिकरण्यमात्रस्य रास-भादिसाधारण्यात्, अत्र च व्यापकत्वांशग्रहे व्यभि-

---

तस्य हेतुत्वम् इति भावः, अतएव कूटस्य कारणत्वादेव, एवं प्रकृतसाध्यतावच्छेदकप्रकारकव्यभिचारज्ञानाभावस्यहेतुत्वे। ननु धूमसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वग्रहस्तु कुत्र-चित्प्रसिद्धः अनवच्छेदकत्वग्रहे प्रतियोगिविधयापि तस्यावश्यक-त्वादिति तत् किमर्थं साध्यतावच्छेदकप्रवेशनं तस्य तादृशज्ञाना-भावानुयोगितयैवोपपत्तेरित्यत आह, प्रसिद्धाया इत्यादि, तदभाव-स्तादृशावच्छेदकत्वाभावः, तथा कल्पनं तादृशज्ञानाभावहेतुत्वक-ल्पनं, न अन्यत्रवृत्तस्य ज्ञानस्य (१) विषयतासम्बन्धेन प्रकृतसाध्य-तावच्छेदके तदभावो वर्त्तत एवेति, तस्य समानविषयत्वेनैव कारण-त्वमिति पूर्व्वपक्षिणोहृदयं, यदीति यत्र(२) दाहजनकतावच्छेदक-

---

(१) इं, अन्यस्य वृत्तज्ञानस्य। (२) इं, दाहजनकत्वावच्छेदेन जातिः।

क्वचिदुपाधिसन्देहात् क्वचिद्विशेषादर्शनसहितसाधा-
रणधर्म्मदर्शनात् तद्विरहश्च क्वचिद्विपक्षबाधकतर्कात्

---

चाराग्रहः समानाधिकरणवृत्तित्वांशग्रहे च तद्विशेषण-
तया सामानाधिकरण्यस्य ग्रहोहेतुरिति वक्तव्यम्।
साध्यसम्बन्धितावच्छेदकरूपवत्त्वलक्षणव्याप्तिग्रहे विशे-
षणतया सम्बन्धस्य ग्रहो हेतुरित्यपि केचित्। यत्तु
विरुद्धे सहचारभ्रमेण व्यापकत्वभ्रमात्सामान्यत एव
सहचारज्ञानं हेतुरिति तन्न असिद्धत्वात् विरुद्धेऽपि

---

जातिस्तथाभावप्रतियोगितावच्छेदिकेति(२) ग्रहो जातस्तच्च वह्नित्वे
तत्सत्त्वात्,बोध्यः अथ वह्नित्वत्वेन तत्राभावो वाच्य इति चेत् त्रिशेष-
व्याप्तिलक्षणे प्रगल्भमतनिराकरणेनैव तस्य निराकृतत्वात्, मह्ना-
नसीयत्वविशिष्टं वह्नित्वमवच्छेदकम् इति ग्रहेऽपि तत्सत्त्वोपगमाच्च
अथ शुद्धवह्नित्वेन रूपेणावच्छेदकत्वग्रहस्याभावोवक्तव्य इति चेत्
तर्हि तस्य प्रतियोगिकोटावेव विनिवेशनेऽसार्व्वत्रिकत्वसहिष्णु-
तायां तत्पुरुषीयत्वघटितत्वादनन्तकार्य्यकारणभावगौरवमिति भावः
एवं ग्राह्याभावग्रहस्य प्रतिबन्धकतायां तत्र तदधिकरणतावच्छेदक-
विनिवेशाद्यत्र तादृशग्रहो न प्रसिद्धस्तत्र न तथा हेतुत्वमिति
भावः। केचिदित्यस्वरसोद्भावनं तद्बीजन्तु साध्यसम्बन्धितावच्छे-
दकेत्यत्रैवेति सङ्कोचे प्रमाणाभावः, सामान्यत इति, यद्विषययोः

---

(२) इ. ग्रहेऽपि वह्नित्वे तत्सङ्गतेः।

क्वचित् स्वतः सिद्ध एव तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थेति चेत् न यावदाशङ्कं तर्कानुसरणात्, यत्र च

---

व्यापकत्वसामानाधिकरण्ययोर्ग्राहकसामग्रीकमयौगपद्याधीनं ग्रहणक्रमयौगपद्यं नतु मिथः कार्य्यकारणभाव इति।

इदं पुनरवधेयं यथा विद्यमानमपि वह्नित्वे व्यवहितविप्रकृष्टरासभादिदेशनिष्ठाभावप्रतियोगितावच्छेदकत्वं न गृह्यते अभावदेशविप्रकर्षादिना ग्राहकाभावात् तथा धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य सत्त्वेऽप्यग्रहसम्भवात्। नानुपलब्धेः प्रतियोगिसत्त्व-

---

कार्य्यकारणभाव इत्यादि व्याप्त्युपष्टम्भाच्च इत्यपि द्रष्टव्यम्, असिद्धत्वादिति सहचारभ्रमस्य व्यापकत्वभ्रमाहेतुत्वादित्यर्थः, क्वाचित्कं सहचारभ्रमस्य व्याप्तिभ्रमपूर्व्ववर्त्तित्वमन्यथासिद्धयति विरुद्धेऽपीति। तथाच यत्रैकदैव उभयोर्भ्रमस्तत्रैव व्यभिचाराद्दोषविधयापि न तस्य कारणत्वमिति भावः।

व्यवधानं मध्यस्थित इत्यादिसम्बन्धः, विप्रकर्षो तद्दूरवर्त्तित्वं, कथं चिदिति विरोधस्य तादृशयोग्यानुपलब्ध्या प्रविष्टत्वादिति भावः, झटित्यवभासस्तु प्रकारान्तरेणापीति हृदयम्, अतएवेति यत एव तस्य लौकिकप्रत्यक्षाविषयत्वमिति निर्णयानीत्युपाध्यायाः साधारणे चेति मिश्राः ग्राह्याभावज्ञानमात्रस्य प्रतिबन्ध-

व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्ति-ग्रहः ॥ ५ ॥

इति तत्त्वचिन्तामणौ व्याप्तिग्रहोपायः समाप्तः ।

---

विरोधित्वादिलक्षणा योग्यतेति न तत्सामान्याभावो लौकिकप्रत्यक्षगम्यः । परन्तु कथञ्चिद्विरोधस्फोरणादिवशाद्धूमत्वादौ गृहीतो धूमवन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावो तद्भिन्नत्वादावुपनयमर्य्यादया गृह्यते अतएवानुमानादिना व्यभिचारग्रहेऽपि न व्याप्तिधीः, निर्णयात्मनि साधारणे वा दोषविशेषाजन्योपनीतभाने संशयादिसाधारणस्य निश्चयात्मनो

---

कत्वमते धारावाहिकसंशयानुरोधेन, कार्य्यतावच्छेदकेति निर्णयानुधावनं, दोषविशेषेति तेन पीतत्वाभावानुमितावपि पीत इत्युपनीतभानं भवत्येवेति, साधारणस्येत्याद्यमते निश्चयात्मन इति द्वितीये, अत्रापि प्रतिबन्धके निश्चयत्वस्य प्रवेशाद्धारावाहिकसंशयोत्पत्तिर्बोध्या, मात्रपदं कृत्स्नार्थकं तेन लौकिकालौकिकसाधारण्यलाभः, स्वमते केवलान्वयिखण्डने व्यवस्थाप्यमानव्याप्तिमभिप्रेत्याह, तत्तद्धूमादाविति । गृह्यमाण इति ननु कथमत्र योग्यानुपलब्धिः देशान्तरवृत्तित्वस्य द्रव्यत्वादौ सत्त्वेऽपि देशान्तरासन्निकर्षेणैवानुपलम्भसम्भव इति चेन्न फलबलेन तथा कल्प-

वा विपरीतज्ञानमात्रस्यैव प्रतिबन्धकत्वात्, तत्तद्धूमादौ देशान्तरवृत्तित्वसम्भावनाविरहादिवशात् गृह्यमाणो वह्न्याद्यभाववद्वृत्तित्वाभावो धूमत्वाद्यवच्छेदेन गृह्यते लाघवादित्यपि वदन्ति ॥ ५ ॥

इत्यनुमानदीधितौ व्याप्तिग्रहोपायः समाप्तः।

---

नात् यद्वा गृह्यमाणपदेन ग्रहणमुपनीतभानात्मकमेव विवक्षितं, सम्भावनाविरहस्तु प्रतिबन्धकाभावस्फोरणाय ॥ ५ ॥

इति महामहोपाध्यायकृष्णदाससार्व्वभौमप्रणीतायामनुमानदीधितिप्रसारिण्यां व्याप्तिग्रहोपायः समाप्तः।

## अथ तर्कः ।

### तत्त्वचिन्तामणिः ।

तथाहि धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यान्नोत्पन्नः स्यादित्यत्र किं धूमोऽवह्नेरेव भविष्यति, क्वचिद्वह्निं विनापि भविष्यति। अहेतुक एव वोत्पत्स्यत इति शङ्का स्यात् सर्व्वत्र स्वक्रियाव्याघातः स्यात् ॥ ६ ॥

---

### अथ तर्कदीधितिः ।

हुताशनरासभादिपदार्थसार्थस्यान्वयव्यतिरेकयोरन्वयव्यतिरेकौ धूमस्योपलभमानोऽवश्यमेतेषामन्यतमं कारणं धूमस्येत्यवधार्य्य सन्दिग्धे किमेतानि सर्व्वाण्येव कारणानि, किम्बा कानिचित्तथा, कानिचिच्च नेति, अत्र च यस्य व्यतिरेकेऽपि इतरेभ्यस्तथाविधेभ्यो-

---

### अथ तर्कदीधिति-प्रसारिणी ।

व्यभिचारज्ञानाभावाय कारणताग्राहकं तर्कं प्रदर्शयतो मूलस्यासङ्गतिं परिहरन्नवतारणिकामारभते, हुताशनेत्यादिना सन्देहस्यैव विवरणं, किमेतानीति । आपादकविशेषणविशेष्योभयं सार्थकीकर्त्तुम् एतावान् प्रयास इति ध्येयम् । तत्र चेति तथाच तादृशशङ्कायामीदृशतर्कावतारो घटत एवेति भावः । तत्र चाका-

यदि हि गृहीतान्वयव्यतिरेकं हेतुं विना कार्य्यो-त्पत्तिं शङ्केत, तदा स्वयमेव धूमार्थं वह्नेः, तृप्त्यर्थं भोज-नस्य, परप्रतिपत्त्यर्थं शब्दस्य, चोपादानं नियमतः कथं कुर्य्यात्, तेन विनापि तत्सम्भवात् ॥ ६ ॥

धूमोत्पत्तिमुपलभते तस्याहेतुत्वमेवावधारयति तथा रासभादेर्य्यस्य व्यतिरेके तादृशापरसकलान्वयेऽपि धूमानुत्पत्तिं पश्यति, तस्याकारणत्वमेव निश्चिनुते, तथा वह्निः तत्र चाकारणत्वसन्देहो विरोधितामासाद-यन्निवर्त्तते येन तर्केण तमाह धूम इत्यादि। अनुसन्धे-यश्चावश्यं कार्य्यकारणभावग्रहः, तदधीनत्वाद्व्याप्तिबुद्धेः सामानाधिकरण्येनान्वयव्यतिरेकग्रहात् जायमानस्य तथैव हेतुहेतुमद्भावं गृह्णतस्तस्यैव वा व्याप्तिपरिच्छेद-

रणत्वसन्देहो विरोधितामिति उपाध्यायमतमभिप्रेत्य, इतरथा तत्र सामग्री बोध्या, ननु मूलासङ्गतिस्तदवस्थैवेत्यत आह, अनुसन्धेयश्चेति। अपेक्षणीय इत्यर्थः। तथाच धूमो यदि वह्नि-व्यभिचारी स्यात् वह्निजन्यो न स्यात् इति व्याप्तिग्राहके इष्टा-पत्तिशङ्कायामुपयुज्यत इति भावः, (१) कारणताग्रहस्यैव व्याप्तिग्रहत्वं व्यवस्थापयति, सामानाधिकरण्येनेति, तथैव सामा-नाधिकरण्येनैव गृह्णतो विषयी कुर्व्वतः, तस्यैव ज्ञानस्यैव,

(१) इं, अपेक्षणीय इत्यादि इति भाव इत्यन्तपाठो नास्ति।

कत्वात्, विपर्य्यये तत्कोटिमात्रपर्य्यवसयिनश्च तर्कस्य तदभावकोटिकशङ्कानिवर्त्तकत्वम् अन्यथा धूमो यदि वह्नितच्छून्यजन्यान्यतरो न स्यात् तदा जन्यो न स्यादित्यादेरपि तथात्वापत्तेः, तथा पर्य्यवसायिता च क्वचिद्विशेषतो व्याप्त्या सामान्यतोऽपि क्वचित्पक्षधर्म्मतावलात् तत्सम्पत्तये चात्र वह्न्यसमवहिताजन्यत्वेन पक्षो विशेष्यः, विशेषणवत्त्वेनोपस्थितेर्विशिष्टाभावबुद्धेर्विशेष्याभावमात्रावलम्बित्वात्, तथोपस्थितिविरोधि

---

व्याप्तिपरिच्छेदकत्वात्, व्याप्तिविषयत्वात्, वह्न्यसमवहिताजन्यत्वं पक्षेऽपि दातुं प्रणालीमाह, विपर्य्यय इति। तत्कोटीति। यदा यत्प्रकृतं तदित्यर्थः, मात्रपदेन तदभावव्युदासः। इदमेव व्यवस्थापयति, अन्यथेति। तथात्वापत्तेः जन्यत्वशङ्काप्रतिबन्धकत्वापत्तेः, तच्छून्यत्वं वह्न्यभावसमवहितत्वं न च तद्वृत्तिभिन्नत्वाप्रसिद्धेरन्यतरत्वाप्रसिद्धिः, वह्निव्याप्तिकारणस्तोमस्यैव तथाविधस्य सत्त्वात् न च। तथापि नान्तरीयके व्यभिचारः, तावतापि प्रकृते प्रयोजनस्याप्रत्यूहत्वात्। केचित्तु वह्निर्वह्निसमवहितः तच्छून्यं तदभावसमवहितं तदुभयजन्यान्यतरो न स्यादिति च योजना, अतएव क्वचित्पुस्तके तथैव पाठ इत्यप्याहुः। तथा पर्य्यवसायिता तत्कोटिमात्रपर्य्यवसायिता। क्वचिदिति। स्वयं वक्ष्यमाणतर्के इत्यर्थः। तथोपस्थितीति। तादृशविशिष्टपक्षोपस्थितीत्यर्थः। नन्वत्र तर्के

चावङ्केरित्यादिशङ्काद्वयमग्रे निरसनीयम् । वस्तुतो वह्न्यजन्यमपि वह्निसमवहितजन्यं वह्न्यसमवहिताजन्यञ्च सम्भवतीति वह्निजन्यत्वपर्य्यवसितं वह्निसमवहितजन्यत्वं वाच्यम् । तथाच घटादौ व्यभिचारवारणाय आपाद्यकोटिप्रतियोगिविशेषणार्थकं सत्यन्तम्, अजन्ये जन्ये च नान्तरीयके व्यभिचारवारणाय जन्य इति तदर्थस्तु वह्न्यसमवधानकालीनवह्नितत्समवधाने-

---

यदि वह्निसमवहितजन्यो न स्यादित्यत्र वह्निसमवहितजन्यत्वं यदि वह्निजन्यत्वं तदानान्तरीयके व्यभिचारः ।

अथ वह्निविशिष्टकारणस्तोमजन्यत्वं तदोद्देश्यस्य वह्निजन्यत्वस्यासिद्धिः । किञ्च वस्तुतो विशेष्याभावावगाहिनोऽपि विपर्य्यस्य विशिष्टाभावत्वेनैव विषयता, तथा चासङ्गतिः, एवं वह्न्यसमवहिताजन्यत्वस्योभयत्र प्रवेशे गौरवादाह, वस्तुत इत्यादि । तादृशतर्के पक्षधर्म्मताबललभ्यस्यापि साध्यस्यान्यथासिद्धिं प्रदर्शयति, वह्न्यजन्यमपीति । अतएव वह्न्यसमवहिताजन्यमित्यपि पाठः, तस्य पक्षतावच्छेदकवैशिष्ट्यस्फोरकत्वात्, शुद्धवह्निसमवहिताजन्यत्वाभावस्य घटादिसाधारणत्वात्, आपाद्यकोटीति । जन्यत्वे विशेषणमित्यर्थः । क्रमेण शुद्धस्य विवक्षितस्य च व्यावृत्तिं प्रदर्शयति, अजन्य इति । विवक्षितमेवाह, तदर्थस्त्विति । जन्यत्वप्रवेशे गौरवादाह, तथाविधेति । निष्कृष्टं तद्दर्शयति तथाचेत्यादि सत्यन्तार्थ-

तरयावत्कारणजन्यत्वं, तथाविधयावत्कारणकत्वमिति यावत्, तथाच वह्न्यसमवहिताजन्यत्वे सति वह्न्य-

---

व्यावृत्तिस्तु स्वयमुक्तैव। नान्तरीयके वह्नितत्समवधानेतरयावत्का-रणत्वस्य सत्वादाह, वह्न्यसमवधानकालीनेति। वह्न्यसमवधान-कालीनयावत्कारणत्वाभावस्य धूमे सत्वादिष्टापत्तेराह, वह्नीति। एकैकदाने तथाचेष्टापत्तिरित्यत उभयं वह्निसमवधानं वह्निकारण-तानिर्व्वाहकप्रत्यासत्तिः। न च वह्निव्याप्यं नान्तरीयके व्यभि-चारतादवस्थ्यं, तत्र हि तत्समवधानेतरस्य धूमस्य वह्न्यसमवधान-कालीनत्वाभावादेव व्यभिचारवारणमिति, अतएव वह्नेः स्वातन्त्र्ये-णापि निर्द्देशः।

इन्धनादेर्वह्न्यसमवधानकालीनत्वान्नान्तरीयके व्यभिचारताद-वस्थ्यमित्यतो यावदिति। नन्वत्र तथापीष्टापत्तिः, यावत्कारण-मध्यपतितस्य धूमावयवस्य वह्न्यसमवधानकालीनत्वाभावात् इति। अत्राहुः धूमस्य दध्यादितुल्यतया धूमद्व्यणुक एव वह्नि-जन्यत्वं यदभिप्रायेणैतस्य तर्कस्यावतार इति तस्यावयवः पर-माणुरूपो वह्न्यसमवधानकालीन एवेति, न तत्रेष्टापत्तिरिति। न चान्वयव्यतिरेकप्रदर्शनं स्थूलमादायविरुद्धमिति वाच्यम्, स्थूलान्वयव्यतिरेकस्यैव परम्परया तदनुमापकत्वेनैव उपयोगित्वा-दिति केचित्। परे तु यावत्कारणव्यक्तेर्वह्न्यसमवधानकालीनत्वं न धूमस्थलेऽपि वह्निसमनियतेन्धनादिव्यक्तेर्वह्न्यसमवधानकालीन-त्वाभावादतो यावत्वं कारणतावच्छेदकस्यैव विशेषणं, तथाच

समवधानकालीनवह्नितत्समवधानेतरयावत्कारणको न स्यादिति पर्य्यवसितोऽर्थः। यत्तु नान्तरीयवह्निके व्यभिचारवारणाय आपादककोटाविव विशेषणं सत्यन्तार्थः, स च वह्न्यघटितसामग्र्यजन्यत्वमिति तन्न प्राक् तदसिद्धेः॥ ६ ॥

यावन्ति कारणतावच्छेदकानि तदालिङ्गितस्यैव प्रत्येकं वह्न्यसमवधानकालीनत्वं वक्तव्यम्। एवञ्च धूमं प्रत्यपि धूमावयवत्वेनैव न कारणत्वं अवयवत्वस्य समवायिकारणतया आत्माश्रयात्, किन्तु दध्यादाविव पृथिवीत्वेनैव, रूपविशेषादिस्तु दध्यादौ रसविशेषादिरिव सहकारीति नातिप्रसङ्गः। तथाच पृथिवीत्वावच्छिन्नस्य वह्न्यसमवधानकालीनत्वान्नानुपपत्तिरिति समादधिरे। न चार्द्रेन्धनक्रियाध्वंसे क्रियानन्तरोत्पत्तिकेन वह्निना सह यः संयोगस्तज्जन्ये व्यभिचारः, भावत्वेन विशेषणात् (१) आपादककोटाविति वह्निजन्यत्वाभावरूपे वह्निसमवहिताजन्यत्व इत्यर्थः। वह्न्यघटितेति। अत्र तदघटितत्वं तदविषयकप्रतीतिविषयत्वं, वह्निघटितसामग्र्या वह्न्यविषयकप्रतीत्यविषयत्वात्। प्रागिति धूमे वह्निजन्यत्वसंशयदशायां वह्निघटितसामग्र्यजन्यत्वस्य। ग्रहीतुमशक्यत्वादिति सिद्धे वह्निजन्यत्वे पक्षविशेषणीभूतवह्न्यघटितसामग्र्यजन्यत्वस्य निश्चयः, निर्णीते च तस्मिन् पक्षधर्म्मताबलात् वह्निजन्यत्वस्य निर्णय इत्यन्योन्याश्रयः, तेन च स्वमतेऽपि

(१) इं, नचेत्यादिः विशेषणादित्यन्त पाठस्तु सर्व्वस्मिन् पुस्तके नास्ति।

तस्मात्तत्तदुपादानमेव तादृशशङ्काप्रतिबन्धकं शङ्कायां न नियतोपादानं नियतोपादाने च न शङ्का, तदिदमुक्तं तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने

---

अत्राद्या द्वयी शङ्का इष्टापत्तिपर्य्यवसायिनी, द्वितीया पुनरापादकाद्यप्रसिद्धपर्य्यवसायिनी, अवह्नेः वह्निशून्यात् तदुपादानमिति करणव्युत्पत्त्या तदीयकार्य्यप्रयोजकताज्ञानपरम् तादृशान्वयव्यतिरेकानुविधानबोधपरं वा अग्रेतनमपि स्वक्रियापदं तत्परमेव कृत्यादेः शङ्काप्रतिबन्धकत्वे मानाभावात् कारणताग्रहोत्तरकालीन-

---

वह्निसमवहिताजन्यत्वं दुर्ग्रहं, धूमविशेषे वह्न्यभावविशिष्टकारणाजन्यत्वस्य सुग्रहत्वादिति अस्मन्मते तस्यैव पक्षत्वादिति ॥ ६ ॥

अत्रेति । स्वविवक्षिततर्केत्यर्थः । इष्टापत्तीति । उभयथापि वह्न्यसमवहिताजन्यत्वविशेषणाभावाद्बोध्या । आपादकादीत्यादिपदेनापाद्यपरिग्रहः । ननु अवह्नित्वं वह्निभिन्नत्वं, तथाच वह्निभिन्नजन्यत्वेऽपि वह्न्यसमवहिताजन्यत्वं स्यास्यतीति कुत इष्टापत्तिरित्यत आह, अवह्नेरिति । उपादानपदस्य भावव्युत्पन्नतया कृतिप्रसिद्धतया विवक्षितासिद्धिरित्यत आह, करणेति । तदीयकार्य्यं धूमादि । ननु प्रयोजकत्वस्यान्यथासिद्धिचतुष्टयाभावप्रवेशे गौरवादाह, तादृशेति । नियतेत्यर्थः । कृत्यादेरित्यादिना क्रियापरिग्रहः । ननु कारणत्वग्रहान्यथानुपपत्तिरेव मानमत आह, कारणतेति ।

स्वक्रियाव्याघातो न भवतीति, न हि सम्भवति स्वयं वह्न्यादिकं धूमादिकार्य्यार्थं नियमत उपादत्ते, तत्-कारणं तन्नेत्याशङ्कते चेति, एतेन व्याघातो विरोधः,

त्वाच्च। यद्यपि चैतावता धूमत्वावच्छिन्नं प्रति वह्नेर्जनकत्वं नायाति तृणारणिमणिन्यायेन वैकल्पिक-कारणतायामपि तथात्वसम्भवात्। तथापि विशेषाणां कार्य्यकारणभावग्रहस्तर्केण न तद्विरोधशङ्कायामपनीतायां जायमानः, सामान्यव्यभिचारानिर्णयानुगतागुरु-विशेषरूपान्तरानुपस्थितिलाघव-प्रतिसन्धानादि-वशात् सामान्यत एव तं परिच्छिनत्ति, प्रामाणिकी च तथैवा-

ननु वह्निसमवहिताजन्यत्वं धूमविशेष एव निरटङ्कीति तस्यैव पक्षत्वं तत्कुतः सामान्यतः कारणताग्रह इति शङ्कते, यद्यपीति। तथात्वं विशेषे नियतान्वयव्यतिरेकानुविधायित्वम्। अपनीताया-मिति। विशेषे नियतान्वयव्यतिरेकानुविधायित्वरूपव्यावर्त्तकधर्म्म-दर्शनादित्यादिः। सामान्येति। तेन द्रव्यत्वनिरासः। अनुगतेति। न तद्धूमत्वनिरासः, अगुर्विति। तेन चक्षुःकटुजनकद्रव्यत्वादि-निरासः, सामान्यत एव धूमत्वेनैव तत्कार्य्यकारणभावं परिच्छेदो विषयिकरणं प्रामाणिकी प्रमाणकी, तथैव तादृशसामग्रीसम-वधानेनैवाप्रामाणिकी प्रमाणसिद्धी तथैव सामान्यत एवेत्यपि, केचित्तु ननु सामान्यतो व्यभिचारशङ्कासत्त्वे कथं ग्रह इत्यत आह,

स च सहानवस्थाननियत इति तत्राप्यनवस्थेति निरस्तं स्वक्रियाया एव शङ्काप्रतिबन्धकत्वात्। अतएव व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम्॥ ७॥

---

न्वयव्यतिरेकौ, फलबलेन लाघवज्ञानादिशून्याया एव सामान्यव्यभिचारशङ्कायाः प्रतिबन्धकत्वं कल्प्यते। अपरे तु धूमत्वावच्छिन्नस्य वह्न्यजन्यत्वेन जन्यत्वविशिष्टस्य यथाश्रुतवह्न्यसमवहिताजन्यत्वस्य व्यतिरेक एवापादनीयः तच्चोक्तन्यायेन तादृशवह्नियुक्तकारणकलापजन्यत्वग्रहेण तद्व्यतिरेकजन्यत्वशङ्कानिरासात्, वह्नि-

---

फलबलेनेति। तथाच लाघवज्ञानमुत्तेजकमिति। उक्तसामग्रीव्यतिरेकेऽपि धूमत्वावच्छिन्नस्यैव प्रथमत एव वह्निजन्यत्वग्रह इति ये वर्णयन्ति तन्मतमाह, अपरेत्विति। यथाश्रुतेति। तेन प्रगल्भमतनिरासः, एतत् सिद्धतर्कश्च धूमत्वावच्छिन्नो धूमो यदि वह्निजन्यो न स्याज्जन्यत्वे सति वह्न्यसमवहिताजन्यो न स्यादित्येवं रूपः, वह्न्यसमवहिताजन्यत्वस्य विशिष्यत्वानुधावनं प्रामाण्यख्यापनाय तेन तन्निर्णयस्यैव शङ्काप्रतिबन्धकत्वं, अतएवोपादानपदमपि अग्रे तत्परतया व्याख्यास्यते, धूमत्वावच्छिन्नत्वस्यैव वह्न्यसमवहिताजन्यत्वं ग्राहयति, तच्चेति। अग्रे सुग्रहमित्यनेनान्वितम्। उक्तन्यायेनेति आभासोक्तन्यायेनेत्यर्थः। तदिति। वह्नियुक्तकारण-

विरहेऽपि निरतिशयस्यैव तादृशसमूहस्य धूमजनकत्व-सन्देहस्य च तथाविधात् धूमानुत्पाददर्शनेनैवायोगात्, तादृशस्यैव क्वचिद्वह्निं क्वचिच्चेतरदासाद्यजनकत्वसम्भावनायाश्च क्वचिद्धूमानुत्पादप्रयोजकत्वेनावधृतस्य वह्नि-विरहस्यैव तथाविधसमूहत्वे धूमानुत्पत्तिसामान्यं प्रति लाघवात्, प्रयोजकत्वनिर्णयेनापनयान्मनसैव सुग्रहं, वह्नेर्वह्निसमवहितस्योपादानम् ॥ ७ ॥

---

कलापेत्यर्थः। अस्यैव कलापस्य वह्न्यसमवहिततादशायां जन्यत्व-शङ्कां निरस्यति, वह्निविरहेऽपीति। निरतिशयस्य निर्विशेषितस्य, तथाविधान्न वह्न्यसमवहितान्न। तादृशस्यैव तथा कलापस्यैव कालिकसमवधानव्युदस्य दैशिकं व्युदस्यति, क्वचिच्चेतरदिति। तादृशस्तोमस्यैव वह्न्यभावदशायामित्यर्थः। अपनयादिति। सम्भा-वनाया इत्यनेनान्वितम्। केचित्तु अवह्नेरित्यादिशङ्काया आद्य-दलेन निरासः। क्वचिद्वह्निं विनेत्यस्याः शङ्कायाश्च वह्निविरहे-ऽपीत्यादि द्वाभ्यां निरासः इत्यर्थमाहुः। तच्च तादृशशङ्कयोर्मूल-कता तर्क एवोत्थापयिष्यमाणतया सन्दर्भविरुद्धमिति। धूम-सामान्येन वह्निरिन्द्रियलौकिकसन्निकर्षाभावात् तद्विशेष्यकज्ञाना-सम्भवादाह, मनसेति। ननु वह्नेरेवेत्यत्र वह्निभिन्नानुपादानं प्राप्तं, तच्च न शङ्काप्रतिबन्धकमिति वह्न्यसमवहिताजन्यत्वमेव शङ्का-प्रतिबन्धकतया विवक्षन्नाह, वह्नेरिति ॥ ७ ॥

व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुत इति खण्डनकारमतमप्यपास्तम्। न हि व्याघातः शङ्काश्रितः, किन्तु स्वक्रियैव शङ्काप्रतिबन्धिकेति न वा

---

अत्र च नियमव्यवच्छेद्यस्य वङ्क्यसमवहितानुपादानस्य प्रयोजके तदजन्यत्वज्ञाने परम्परया वह्निसमवहितोपादानस्य वा प्रयोजके तत्र तात्पर्य्यम्। यत्त्वन्वयव्यतिरेकानुविधायित्वज्ञानमेव विशेषदर्शनतया-शङ्काप्रतिबन्धकं तदेव तर्कघटकं, तदिदमुक्तं यदि गृहीतान्वयव्यतिरेकं हेतुमितीति तन्न, याद्दच्छिकस्य

---

ननु तथाप्युपादानं कथं प्रतिबन्धकमित्यत आह, अत्र चेति। तथाच वह्निसमवहितस्य नियमत उपादानं कथं कुर्य्यादिति मूले कथमित्यत्र यो नियमव्यवच्छेदस्तद्विषयस्य वङ्क्यसमवहितानुपादानस्य प्रयोजक इत्याशयः कल्पः। एतेन वङ्क्यसमवहितस्योपादानमेव नियमव्यवच्छेद्यं, न तु वङ्क्यसमवहितानुपादानमित्यसङ्गतिप्रदर्शनं परास्तम्। ऋजुमार्गेण वङ्क्यसमवहिताजन्यत्वज्ञानमेव मूलतात्पर्य्यविषयतया व्याचक्षाणः कल्पान्तरमाह, परम्परयेति। वङ्क्यसमवहितताजन्यत्वे ज्ञाते तर्कः तर्के च सति वह्निजन्यत्वज्ञानं तस्मिन् सति वह्निसमवहितस्योपादानमित्येवं रूपया। तत्र वङ्क्यसमवहिताजन्यत्वज्ञाने, विशेषेति। व्यावर्त्तकेत्यर्थः। याद्दच्छिकस्य यत्किञ्चिद्वह्निनिष्ठस्य,

विशेषदर्शनात् क्वचित् शङ्कानिवृत्तिरेवं स्यात्, न चैतादृशतर्कावतारो भूयोदर्शनं विनेति भूयोदर्शनादरः, न तु स स्वत एव प्रयोजकः, अतएव न तदाहित-

---

तदनुविधानस्य व्यभिचारित्वान्नियतस्य चोक्ताभेद-सम्पादकत्वादिति वदन्ति तच्चिन्त्यम्। केचित्तु कार्य्यकारणभावग्रहानन्तरं व्याप्तिग्रहाय व्यधिकरणस्य जनकत्वशङ्कानिरासार्थमयं तर्कः, तथाच धूमो यदि सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वह्न्यजन्यत्वे सति सामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यो न स्यात्, वह्निजन्यो न स्यात्। अप्रत्यासन्नस्याजनकत्वात्,

---

व्यभिचारित्वात् अव्यावर्त्तकत्वात्, नियतस्य तद्धर्म्मावच्छिन्नस्य, उक्तेति। धूमत्वावच्छिन्नकारणत्वं यथा प्रागगृहीतं तथा तद्धर्म्मावच्छिन्नान्वयव्यतिरेकानुविधायित्वमित्यर्थः। उक्तं तच्चोक्तन्यायेनेत्यादिना तदभेदपर्य्यवसानान्न मतभेद इति केचिन्न, तत्र दूषणसङ्गतिश्चिन्तनीया तच्चिन्त्यमिति। नान्तरीयके व्यभिचारादिति। यदि प्रागुक्तविवक्षाया नान्तरीयके व्यभिचारो व्युदस्यते, तदा धूमानुत्पत्तिं प्रति वह्निविरहप्रयोजकत्वं यदुक्तं तच्छैथिल्यमेवानेनोक्तमित्यन्ये। लाघवज्ञानस्यावश्यकत्वे उक्तलाघवज्ञानाजन्यत्वग्रह एवास्तु किमनेनायासेनेत्यर्थः। इत्यपि कश्चिन्नान्तरीयके व्यभिचारं प्रकारान्तरेण खण्डयतामतमाह, केचित्त्विति।

संस्कारो न मानान्तरं तर्कस्याप्रमात्वात्, तच्च प्रत्यक्ष-व्याप्तिज्ञाने हेतुः, तदभावेऽपि शब्दानुमानाभ्यां तद्-ग्रहात् ॥ ८ ॥

---

तादृशाजन्यत्वञ्च प्रत्यासत्त्यन्तरशालिवह्निसत्वेऽपि धूमा-नुत्पादादिना ग्राह्यमिति इदमेव च वाचोभङ्ग्या परे परिष्कुर्व्वन्ति, धूमो यदि वह्न्यनधिकरणदेशानुत्पत्ति-कत्वे सति वह्न्यधिकरणदेशोत्पत्तिको न स्यात् जन्यो न स्यात्। तादृशानुत्पत्तिकत्वग्रहश्च धूमानुत्पत्तिं प्रति वह्निसम्बन्धाभावस्य प्रयोजकत्वे ग्राह्ये उप-स्थितत्वाल्लाघवाच्च, तादृशसम्बन्धाभावस्यैव तथात्वाव-धारणादिति तच्चिन्त्यम्। मिश्रास्तु परं प्रति व्याप्ति-ग्रहोपाये प्रदर्श्यमाने व्यभिचारशङ्कानिरासहेतुत्वेनोप-दर्शिते तर्कं मूलशैथिल्यादिशङ्कोद्भावकं तं प्रति व्याघा-

---

प्रत्यासत्त्यन्तरेति। सामानाधिकरण्यातिरिक्तेत्यर्थः। इदमेव चेति। व्यधिकरणस्य जनकत्वशङ्कानिरासरूपमुख्यप्रयोजनस्योभयत्र तुल्य-त्वादित्यर्थः। तादृशसम्बन्धः सामानाधिकरण्यम्। तथात्वं प्रयो-जकत्वम्। तच्चिन्त्यमिति। उक्तयुक्त्या वह्निजन्यत्वस्यैव प्रागेव सामानाधिकरण्यार्थविषयत्वादिति तादृशलाघवज्ञानस्य वह्नि-जन्यत्वग्रह एव सहकारित्वकल्पनस्तु किमेतावताप्रयासेनेत्यपि

ननु सहचारदर्शनव्यभिचारादर्शनवद्व्यभिचारशङ्का-विरहानुकूलतर्कयोर्ज्ञानं व्यभिचारिसाधारणमिति न ततोऽपि व्याप्तिनिश्चय इति चेन्न स्वरूपसतोरेव तयो र्व्याप्तिग्राहकत्वात्, सत्तर्काद्व्याप्तिप्रमा तदाभासात्तद-

---

तोऽयमुपदर्श्यते, मैवं शङ्किष्ठाः, तथा सति तत्तत्कार्य्या-र्थितया तत्र तत्र कारणे तवैव प्रवृत्तयोव्याहन्येरन् यदाह न हि सम्भवति स्वयं वज्रादिकमितीति प्राहुः। तच्चेति। तत् व्यभिचारादर्शनं व्यभिचारज्ञान-सामान्याभावः योग्यतादिसन्देहेऽपि शब्दादिना अर्थ-निश्चयात् तत्तर्कस्वरूपमिति केचित् ॥ ८ ॥

ननु वस्तुतो व्याप्तिसत्त्वे तर्काभासात्प्रमाभ्रमयो-

---

कश्चिन्न। परं चार्व्वाकं, मूलं व्याप्ति शैथिल्यं, तत्र तर्काद्य-नवतार उपदर्शनमेवाह, मैवमिति। ग्रन्थसम्मतिं दर्शयति। यदाहेति। प्राहुरिति। तथाच उपादानपदस्य सम्मुख्यार्थत्वमेव प्रकर्षः। व्यभिचारज्ञानेति। शब्देऽपि व्यभिचारज्ञानस्य प्रतिबन्धक-त्वात् सामान्यपदम्। योग्यतादीति। तथाच तज्ज्ञानसामान्या-भावस्तत्र न हेतुरिति भावः। स्वरूपमिति। नपुंसकत्वनिर्व्वा-हार्थम् ॥ ८ ॥

तर्काभासादिति। धूमो यदि वह्निव्यभिचारी स्याद्द्रव्यं न

प्रमा विशेषदर्शनसत्यत्वासत्यत्वाभ्यां पुरुषज्ञानमिव। अपरे तु यत्र तर्के व्याप्त्यनुभवो मूलं, तत्र तर्कान्तरा-

---

रुत्पादानुत्पादाभ्यां व्यभिचार इत्यत आह। विशेषदर्शनेति। तथाच यथा तस्य बोध्यतदभावतद्विषयत्वे सत्यत्वासत्यत्वे तथा तर्कस्यापीति, अत्र च सत्यत्वादिसम्पादके धर्म्मिणो बोध्यादिमत्त्वे बोध्यादिमद्धर्म्मिसन्निकर्षे वा तात्पर्य्यं लाघवात्, तर्कस्य व्यभिचारेणाहेतुतायाः स्वयमेव दर्शितत्वाच्च। अथ विपरीतज्ञानोत्तरप्रत्यक्षे तन्निवर्त्तकत्वेन विशेषदर्शनस्य हेतुत्वं

---

स्यादित्याकारात्मकादित्यर्थः। व्यभिचार इति। आद्यस्य व्यतिरेकव्यभिचारोऽन्यस्यान्वयव्यभिचार इत्यर्थः। बोध्येति। विशेषादर्शनस्य सत्यत्वे यत्र पदपाद एवकारभ्रमो ज्ञातस्तत्र व्यभिचार इति इदमुक्तमिति भावः। ननु व्याप्तिमत्तर्कस्य प्रमाहेतुत्वापेक्षया व्याप्तिमत्त्वमेव प्रयोजकमस्त्वित्यभिप्रायेणाह, अत्र चेति। ननु व्याप्तेर्लौकिकप्रत्यक्षाविषयत्वं प्राप्य यथा व्यवस्थापितं प्रागेव, तथाचालौकिके तज्ज्ञाने व्याप्तेः कथं कारणमित्यत आह, बोध्यादीति। ननु सन्निकर्षः क्वचित्तज्ज्ञानं, यत्र च लौकिकप्रत्यक्षं तत्र च संयुक्तसमवायादिरित्यतोऽननुगमात्तदपेक्ष्य तर्कस्यैव तथात्वमस्तु इत्यत आह, तर्कस्य चेति। दर्शितत्वादिति। यत्र व्याघातादिना शङ्काया अभावस्तत्रैवेत्यर्थः। विपरीतेति। भ्रमसंशयोत्तरेच्छा-

पेक्षा, यत्र तु व्याप्तिस्मरणं हेतुः, तत्र न तर्कान्तरापेक्षेति नानवस्था, अस्ति च जातमात्राणामिष्टानिष्टसाधनतानुमितिहेतुव्याप्तिस्मरणं तदानीं व्याप्त्यनुभावकाभावात् तन्मूलानुभवमूलाचाग्रेऽपि व्याप्तिस्मरणपरम्परेति। यत्त्वनादिसिद्धकार्य्यकारणभावविरोधादिमूलाः केचित्तर्का इति तन्न, तत्र प्रमाणानु-

---

तच्च तर्कस्यापीति चेत्। अस्तु तावदापाततस्तथा, तथाप्यन्यत्र क्लृप्तप्रामाण्यादिप्रयोजकादेव तत्र प्रामाण्याद्युपपत्तौ न तस्यापि विशेषतः कारणत्वं गौरवात्। उक्तञ्च विशेषणज्ञानस्य विशिष्टज्ञानकारणत्वमते सर्व्वत्र विशेष्यसम्बन्धासम्बन्धज्ञानमेव प्रमाभ्रमप्रयोजकमिति वदन्ति। तत्र प्रमाणेति इदमनादिसिद्धत्वज्ञानस्य

---

प्रत्यक्ष इत्यर्थः। तन्निवर्त्तकत्वेनेति। भ्रमादिविरोधित्वेनेत्यर्थः। आपातत इति। तादृशप्रत्यक्षत्वं कार्य्यतावच्छेदकमेव न अव्यवहितत्वस्यावश्यकत्वेन तत्तद्व्यक्तित्व एव विश्रामात् अर्थवशसम्पन्नत्वाच्चाऽभ्युपेत्य समाधत्ते, तथापीति। अन्यत्रेति। बोध्यादिमत्सन्निकर्षत्वं नैकमित्युक्तं प्रागित्यत आह। उक्तञ्चेति। विशेष्यसम्बद्धं यद्विशेषणं तस्य ज्ञानमित्यर्थः। ननु पूर्व्वपक्षे कार्य्यकारणभावे वास्तवमनादित्वमुक्त्वा दूषणे प्रमाणगवेषणं मूल-

योगेऽनुमान एव पर्य्यवसानात्। न च व्याप्तिग्रहा-न्यथानुपपत्त्यैव तर्कस्यानादिसिद्धव्याप्तिकत्वज्ञानमिति वाच्यम् अनुपपत्तेरप्यनुमानत्वात्। अन्ये तु विपक्ष-बाधकतर्कादनौपाधिकत्वग्रह एव तदधीनो व्याप्तिग्रह इति तदपि न तर्कस्याप्रमाणत्वात्।

---

प्रयोजकत्वमभिप्रेत्य परार्थाभिप्रायेण वा अनुमानत्वात् व्याप्तिग्रहाधीनप्रवृत्तिकत्वात्। व्यभिचारशङ्केति द्वारेण द्वारिणो नान्यथासिद्धिरिति भावः। अनुमानमात्र इति अनिश्चितसाध्यपक्षके सर्व्वत्र सम्भवित्वात्, पक्षे साध्यनिर्णयेऽनुमानवैयर्थ्यात्, उपाधित्वेन स्वव्यभि-चारेण व्यभिचारोन्नायकत्वेनानुमानमात्रोच्छेदकता-ज्ञानमेव साध्यव्यापकताबुद्धिं विरुन्ध्यादित्याशङ्क्याह,

---

कृताकृतं तच्च न घटत इत्यत आह, इदमनादीति। अभिप्राय-सङ्कोचादाह, परार्थेति। तथाच प्रमाणमवश्यमेव गवेषणीय-मित्यर्थः। स्वमतेऽर्थापत्तेरतिरिक्तप्रमाणत्वमभिप्रेत्य मूलं तत्साधा-रण्येन योजयति। व्याप्तिग्रहेति। ननु यत्र पक्षे साध्यनिश्चयो जातस्तत्र पक्षेतरस्यानुपपत्त्यानुमानमात्रमिति मूलं न घटत इत्यत आह, अनिश्चितेति। अनिश्चितसाध्यके साध्यनिश्चयार्थमनुमान-कल्पने सामग्रीबलान्निश्चितसाध्यकेऽपि तत्कल्प्यत अनिश्चितसाध्य-

| | | |
|---|---|---|
| *Markandeya Purana, Fasc. 5-7 @ /10/ each ... ... | 1 | 14 |
| *Mīmāṁsā Darçana, Fasc. 10-19 @ /10/ each ... ... ... | 6 | 4 |
| *Nyāyavārtika, Fasc. 1--6 @ /10/ each ... ... ... ... | 3 | 12 |
| *Nirukta, Vol. IV. fasc. 1-8 @ /10/ each ... ... ... | 5 | 0 |
| *Nitisara, Fasc. 3-5 @ /10/ each ... ... ... ... | 1 | 14 |
| Nityācārapaddhatiḥ, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Nityācārapradīpaḥ Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1-3. @ /10/ each ... | 6 | 14 |
| Nyayabinduṭīkā, Fasc. 1 @ /10/ each .. ... ... | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2--6 ; Vol. II, Fasc. 1--3 @ /10/ each ... ... ... ... ... | 5 | 0 |
| Nyayasarah ... ... ... ... ... ... | 2 | 0 |
| Padumawati, Fasc. 1--5 @ 2/ ... ... ... ... | 10 | 0 |
| *Pariçiṣta Parvan, Fasc. 3--5 @ /10/ each ... ... ... | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Prithivirāj Rāsa, Part II, Fasc. 1--5 @ /10/ each ... ... ... | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Prākrta Lakṣaṇam Fasc. 1 @ 1/8/ each ... ... ... ... | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1--6 ; Vol III, Fasc. 1--6 @ /10/ each ... ... ... ... ... | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each ... ... ... | 1 | 0 |
| Pariksamukha Sutram ... ... ... ... ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each ... ... | 3 | 12 |
| Rasarnavam, Fasc. 1-3 ... ... ... ... ... | 3 | 12 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Samaraieca Kaha Fasc. 1-3, @ /10/ ... ... ... ... | 1 | 14 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1--4 @ /10/ each ... ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| *Sankara Vijaya, Fasc. 2-3 @ /10/ each ... ... ... | 1 | 4 |
| Six Buddhist Nyaya Tracts. ... ... ... ... ... | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Sragdharā Stotra ( Sanskrit and Tibetan ) .. ... ... | 2 | 0 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each ... ... ... | 1 | 0 |
| Suddhikaumudī, Fasc. 1-4 @ /10/ each ... ... ... ... | 2 | 8 |
| Sundaranandam Kavyam ... ... ... ... ... | 1 | 0 |
| Suryya Siddhanta fasc. 1 ... ... ... ... ... | 1 | 4 |
| Syainika Sastra ... ... ... ... ... ... | 1 | 0 |
| *Taittreya Brahmana, Fasc. 11-25 @ /10/ each ... ... ... | 9 | 6 |
| ,, Pratisakhya, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 4 |
| *Taitterīya Saṁhitā, Fasc. 27-45 @ /10/ each ... ... ... | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc. 10-19 @ /10/ each ... ... ... | 6 | 14 |
| Tantra Vārteka (English) Fasc. 1-8 @ 1/4/ each .. ... ... | 10 | 0 |
| *Tattva Cintāmaṇi, Vol. I, Fasc. 1-9, Vol II, Fasc. 1-10, Vol. III, Fasc. 1-2, Vol. IV. Fasc. 1, Vol. V, Fasc. 1-5, Part IV. Vol. II, Fasc. 1-12 @ /10/ each | 24 | 6 |
| Tattva Cintamani Didhiti Vivriti, Fasc, 1, @ /10/ each ... .. | 0 | 0 |
| Ditto Prakas, fasc. 1-2, @ /10/ each ... ... | 1 | 4 |
| Tattvārthadhigama Sutram, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Tirthacintamoni, fasc, 1, @ /10/ each ... ... .. | 0 | 10 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Tul'si Satsai, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5-13 @ /10/ each ... ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each ... ... | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ ... ... ... ... | 0 | 10 |
| Varṣa Kriyā-Kaumudī, Fasc 1--6 @ /10/ each ... ... ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3--6 ; Vol. II, Fasc. 1--7, @ /10/ each ... | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1-8 Vol- II. Fasc. I @ /10/ each ... ... | 5 | 10 |
| Ditto Vol. II, Fasc. 2-4 @ 1/4/ ... ... ... | 3 | 12 |
| Vivādaratnākara, Fasc. 1--7 @ /10/ each ... ... ... | 4 | |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each ... ... ... | 3 | |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... ... | 1 | |
| Yogasāstra of Hemchandra Vol. I. Fasc. 1-3 ... ... | 3 | |
| *Tibetan Series.* | | |
| Baudhyastotrasangraha, Vol. I ( Tib. & Sans. ) ... ... ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each ... ... | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 ... ... ... ... | 1 | 0 |
| Pag-Sam S'hi Ṭiñ, Fasc. 1--4 @ 1/- each ... ... ... ... | 4 | 0 |
| Rtogs *brjod dpag hkhri* S'iñ ( Tib. & Sans. Avadāña Kalpala Vol. I, Fasc. 1--8 ; Vol. II. Fasc. 1--7 @ 1/- each ... ... | 15 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc 1-6, @ 1/ each | 14 | 0 |
| *Arabic and Persian Series.* | | |
| Ālamgīrnāmah, with Index, (Text) Fasc. 1--13 @ /10/ each ... ... | 8 | 2 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1--4 @ 1/- each ... ... | 4 | 0 |
| Akbarnāmah, with Index, Fasc. 1--37 @ 1/8/ each... ... ... | 55 | 8 |

*The other Fasciculi of these works are out of stock and complete copies cannot be supplied.

